# 1.आधुनिककाले सामवेदेन लोकप्रयोजनम्

**विद्वान् महाबलेश्वर भट्ट,**
सलक्षण सामवेदविद्वान्,
बेङ्गलूरु,कर्णाटकः, 9482013291

**सप्तस्वरैः समस्तं यो जगदेतच्चारचरम्।**
**सञ्जीवयति विश्वात्मा स मे विष्णुः प्रसीदतु।।**

सनातनधर्मे वेदाः धर्ममूलत्वेन अङ्गीकृताः ऋषिभिः मन्त्रद्रष्टृभिः। अतः उक्तम्- “वेदोऽखिलो धर्ममूलम्” इति । ते वेदाः ऋग्यजुःसामाथर्व इति भेदेन चतुर्धा विभक्ताः। तेषु सामवेदः अपि धर्मप्रतिपादकः। कर्मकाण्डे धर्माचरणे “अभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः” इति धर्मसूत्रे प्रतिपादितम्। अभ्युदयफलं अस्य लोकस्य जीवनसाध्यत्वं प्रत्यक्षरूपेण फलमनुभवन्ति धर्माचरणेन कर्माधिकारिणः। अभ्युदयफलं नाम अस्मिन् लोके अनुभूयमानं यथा अन्नप्राप्तिः, आरोग्यप्राप्तिः, गृहे सुखशान्तिप्राप्तिः, प्रारम्भकाले विघ्ननिवारणं, भयनिवारणं, संसारे कष्टनिवारणं, इत्याद्यनेक-प्रयोजनार्थं वेदप्रतिपादितधर्माचरणं कुर्वन्ति। सर्वत्र धर्माचरणानन्तरं यदर्थं तद्धर्माचरणं कर्मानुष्ठानरुपेण विनियुक्तम् तत्फलं अनुभूयन्ते जनैः। तर्हि तेषामुदाहरणार्थं प्रायोगिकरुपेण सप्रमाणग्रन्थरूपेण इदानीं पश्यामः ।

सामवेदे सँहिता आरण्यक-ऊहरहस्य-एकादशब्राह्मणानि-श्रौतसूत्र - गृह्यसूत्र - धर्मसूत्र - पुष्पसूत्र - ऋङ्मन्त्राः,आर्चिकाः,पदपाठः इत्याद्यनेकग्रन्थाः सन्ति तथा श्रौत-स्मार्तप्रयोगाः अपि विलसन्ति । वेदानां प्रायोगिकरूपेणैव फलप्राप्तिः खलु । केवलाध्ययनेनापि वेदज्ञानी इति प्रत्यक्षफलं दृश्यते लोके यथा- ये अध्ययनं न कृतवन्तः ते श्रवणादिफलं प्राप्य- अध्ययनं कृतवन्तं सादरं सम्मानयन्ति । भूतवर्त्तमानभविष्यत्कालेऽपि अध्ययनाधिकारिणः वेदाध्ययनपरम्परां



समरक्षन् संरक्षन्ति संरक्षिष्यन्ति च। एवं वेदाध्ययनफलं प्रत्यक्षरूपेण अनुभवामः आस्तिकाः वयम् । एवं शब्दाध्येतृणाम्। अर्थाध्येतृणामपि मन्तव्यम् । अध्ययनानन्तरं तपःशक्तिसंग्रहणम्। यथा गायत्र्युपदेशा-नन्तरं गायत्र्याः जप-तप-आदिरुपेण ब्रह्मवर्चसादिफलं तत्तत्तपःशक्ति-फलं प्रत्यक्षरुपेण अनुभवन्ति । एवं च गायत्र्यनुष्ठानस्य पापनिवारणफलमुक्तम्-

**“यदह्नात्कुरुते पापं तदह्नात् प्रतिमुच्यते**
**यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रतिमुच्यते”** ।

दिवाकृतपापानि तद्दिनकृतगायत्रीजपेन रात्रौ कृतजपेन रात्रिकृतपापानि नश्यन्ति, तदनुष्ठानकर्तृणां फलरूपेण । तर्हि पापानि कानि पुण्यानि कानि इति तानि प्रश्नोद्भवे सति क्रमात् व्यक्तेः यत्कर्तुं निषिद्धं कृतं यदाचरणं शासितं तानि निषिद्धाचरणानि ज्ञात्वा अज्ञात्वा, वाऽपि कृते पापाः सम्भवन्त्येव ।

सामवेदिनः यज्ञेषु जातकर्मादिसंस्कारेष्वपि सामानि विधिनियमपूर्वकं गायन्ति। विशेषतः सामगानस्यैव सर्वत्र प्राधान्यं वर्तते। यथा सोमयागारम्भे आग्नीध्रमण्डपे उद्गातारः यज्ञसारथिः इति “इमँ स्तोम” इति ऋग्युक्तसामगानं गायन्ति तत्र “यज्ञसारथिसाम” गानस्यैव प्राधान्यं वर्तते। तदेव गातुं तत्र विहितम्। एवं च-सुब्रह्मण्याह्वानकाले ब्रह्मश्रीसामगायन्ति। सर्वत्र विहितान्येव गायन्ति न अन्यानि। सर्वत्र सामगानानां गानोक्त लोकप्रयोजनफलानि विद्यन्ते। सम्पूर्णफलप्राप्तौ अस्माभिः सामगानफलं अवगन्तव्यम्।

यथा भगवद्गीतायां उक्तं - “यज्ञाद् भवति पर्जन्यः पर्जन्यादन्नसम्भवः। अन्नाद्भवन्ति भूतानि” इत्यादि। एवं करिष्यमाणसम्पूर्णयज्ञफलस्य सहकारिस्थाने सामगानानां आवश्यकता वर्तते एव, नो चेत् यज्ञः न सम्पूर्णो भवेत्। तदा कर्मन्यूनतासम्भवे अन्नादीनां प्राप्तिफलेष्वपि न्यूनता सम्भवति।

इदानीं विशेषतः सामगानानां लोकप्रयोजनं अनुसृत्य तत्तद् ग्रन्थादिषु किञ्चिदुद्धृत्य पश्यामः। कर्मणां अङ्गतया पुण्याहवाचनकाले सामगानानां तत्तत्कर्माचरणफले अन्तर्भवति यथा उपनयनाङ्गपुण्याह-वाचनफलं सामगानफलं तदुपनयनं कर्तुं यजमानस्य प्रत्यक्षरूपेण फलं भवति। तदङ्गतया सः पूतो भवति तथा भावयति च। सामगानस्य तत्र "त्यमूषु" सामगाने अन्तर्बहिश्च शुद्धि-ऋद्धि-अभ्युदयादयः फलम्।

सामविधानब्राह्मणे- सामगानानां उपासनं एतल्लोकफलानां अन्नादीनां प्राप्त्यर्थं उक्तम् यथा द्वितीयप्रपाठकस्य तृतीयखण्डे षष्ठवाक्ये "दीर्घतमसोर्को - अर्कशिरो - अर्कग्रीवा" इति चैतानि प्रयुञ्जानः सर्वत्र अन्नं लभते। दीर्घतमसोर्कगानं एवं आरभ्यते। दीर्घतमसोर्कः दीर्घतमा ऋषिः जगती छन्दः सोमो देवता अन्नादीन् प्राप्तुं दीर्घतमसोर्कसामगानजपे विनियोगः इति। विनियोगकाले अन्नादीन् प्राप्तुं इति वक्तुं शक्यते।

हाउहाउहाउ। औहोवाएहियाहाउ। धार्ता।। "धर्ता दिवः पवते" इति ऋक् वर्तते। आरण्यके गानेषु अर्कपर्वे तृतीयखण्डे चतुर्थगानं "अर्कशिरः"- हाउयास्याम् इत्यारभ्यते तत्रैव अष्टात्रिंशत्तमगानम् एवं "अर्कग्रीवा"श्च अर्को यजुरर्कः- "पातीः2। त्रिः। दिवा आ" इति स्तोभेनैव गानम् सुश्राव्यं श्रूयते। एवं च सामविधानब्राह्मणे द्वितीयप्रपाठके लोके प्रयोजनयुक्तसामगानविधानं बहु विद्यते। "अथातः काम्यानाम्" इत्यारभ्य आयुःसाधनस्य "अबोध्यग्नि,महित्रीणा" इत्यादि । शुद्धिकामस्य "भ्राजा भ्राजे" इत्यादि। आरोग्यकामस्य "गौरान्सर्षपान् तुचे तुनाय" इत्यनेन प्राश्नीयात्। अपत्यानां मरणे "अबोध्यग्निः"। रक्षोगृहीतस्य, रोगशमनार्थं, क्षुद्ररोगशमनार्थं, सर्पभयापरिहारार्थं, शस्त्रभयनिवृत्यर्थं, पिपासाभावेच्छोः, जले मरणाभावेच्छोः, निर्विषीकरणार्थं, सर्वत्र क्षेमार्थं विशेषतः सामान्यप्रयोजनं, नगरादिरक्षणार्थं, मार्गे भयनिवृत्यर्थं, जरामृत्यजयार्थं, वशीकरणार्थं,



सौभाग्यार्थं च इत्याद्यनेकविधानानि सन्ति। सामविधाने तत्तदनुष्ठानविधिश्च प्रदर्शितः।

तथैव साम-ऋक्-पद-सप्तस्वर-स्तोभ-अर्थ शब्दसम्बन्धानु-सारेण परस्परं आवश्यकतां अवगन्तव्यम्। एकस्मिन्नेव साम्नि एते सम्मिलिताः सन्ति। केवलस्तोभान् आश्रित्य सामगानानि अपि सन्ति। यथा- अर्कग्रीवा-पातीः2।

उदाहरणार्थम्- "अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि" इति ऋक् पाठे "ओग्नाइ। आग्नआयाहिवी। आग्नाआयाहि" इति संहितायां गानत्रयमस्ति।

किन्तु पदपाठस्तु ऋक्मन्त्रमाश्रित्य भवति। "अग्ने-आ-याहि-वीतये-गृणानः-हव्यदातये-हव्य-दातये । नि-होता-सत्सि-बर्हिषि"। उदात्त - अनुदात्तस्वरितादयः ऋक् पदेषु वर्तन्ते। सामगानानि सप्तस्वराण्याश्रयन्ति। तेषां स्वराणां अपि देवतानिरूपणं भवति। "क्रुष्टः प्राजापत्यो ब्राह्मो वा दैवतम्। वैश्वदेवो वा आदित्यानां प्रथमः, साध्यानां द्वितीयः, अग्नेस्तृतीयः, वायोश्चतुर्थः, सोमो मन्द्रः मित्रावरुणयोरतिस्वार्यः" इति सप्तस्वराणां देवताः अवगन्तव्याः।

यज्ञेषु उद्गाता गानकाले आदौ किमर्थं आगायानि इति वदति । विशेषतः सामवेदस्य सर्व तात्पर्यं इदमेवावगन्तव्यम् । किमर्थं गानानां गायनं आवश्यकमिति। पश्यन्तु "अमृतत्वं देवेभ्य आगायानि"। देवानां अमृतत्वप्राप्त्यै उद्गातारः गायन्ति। "स्वधां पितृभ्य आगायानि" इत्यत्र पितृणां स्वधारूपेण तृप्तिप्राप्त्यर्थं गायन्ति। "आशां मनुष्येभ्यः आगायानि" इति विशेषत अस्य समाजस्य "आशोत्तराणि" सामगानगायनेन लभ्य। ते "तृणोदकं पशुभ्य आगायानि" तर्हि आत्मनः (गातुः) किं लभते इत्युक्ते ते उद्गातारः वदन्ति "अन्नमात्मन इति" सामगानेन समाजे देवानारभ्य पशुपर्यन्तं स्वात्मपर्यन्तं गानफलं लभ्यते इति । विस्तृतं गानं कृतं वायुमण्डले प्रसरति इति ।

अतः उक्तम् —

**“सप्तस्वरैः समस्तं यो जगदेतच्चराचरम्।**
**सञ्जीवयति विश्वात्मा स मे विष्णुः प्रसीदतु”** इति।

स्तोभपदाः अपि अर्थयुक्ताः सन्ति। यथा हिँ। हाउ। होइ। डा। इहा। इडा। भा इत्यादि अनेके स्तोभाः सामगानेषु विशेषतः आदावन्ते विलसन्ति। विनियोगकाले यज्ञेषु अथवा प्रयोगे सान्दर्भिकार्थाः अपि सन्ति। किन्तु सामगानानां अर्थं सम्मिलित्य कथं अवगन्तव्यं इति बहुदुष्करं भवेत्। तत्र ऋगाश्रित्य गानानि सन्ति खलु। इतिहासकाराः सामवेदस्य ऋग्वेदसम्बन्धं मन्यन्ते। किन्तु सामवेदस्य स्वतन्त्रता अस्ति एव।

सामगानेन देवतासन्तुष्टिः प्रथमप्रयोजनम्। देवताः सन्तुष्टाः भवेयुश्चेत् तेषामनुग्रहेण अस्माकं अन्नादीनां प्राप्तिर्भवति। तपः शक्तेः मन्त्रशक्तेरभावात् युगप्रभावाच्च अस्मिन् कलियुगे जनाः सम्पूर्णं फलं न प्राप्नुवन्ति। यथा यज्ञेषु पञ्चभक्तिं विभक्तिमकुर्वन्नेव अस्माकं सौकर्यं अनुसृत्य सर्वे गायन्ति। एवं च उपगातारः न सन्ति इत्याद्यनेक दोषैरपि सम्भूय यदुक्तफलं तत्प्राप्तुं न शक्नुमः तथा अध्ययनस्य प्रौढत्वाभावादपि सम्पूर्णं लोकप्रयोजनं न सम्भवेत्। तदा जनाः वेदज्ञान् निन्दयन्ति ब्राह्मणाः उदरभरणार्थं यज्ञादीनां लोककल्याणनामफलकं संस्थाप्य कुर्वन्ति इत्याद्यनेकारोपाः अपि नास्तिके युगे सञ्ज्वलन्तः सन्ति।

सामवेदस्य स्वरविचारे किञ्चिद्वदामः। छान्दोग्योपनिषदि उक्तं भवति -

**“का साम्नो गतिरिति, स्वर इति होवाच। स्वरस्य का गतिरिति, प्राण इति होवाच । प्राणस्य का गतिरिति, अन्नमिति होवाच । अन्नस्य का गतिरिति, आप इति होवाच। अपां का गतिरित्यसौ लोक इति होवाच। अमुष्य लोकस्य का गतिरिति न स्वर्गं लोकं नयेदिति होवाच। स्वर्गं लोकं वैं सामभिः संस्थापयामः स्वर्ग संस्थावँ हि साम”।**



सामवेदस्य श्रेष्ठतां अनेन उपनिषन्मन्त्रेण ज्ञात्वा उत्साहभरिताः भवेम। “का साम्नो गतिरिति स्वरेषु सामानि सन्ति स्वरस्य का गतिः प्राणेषु स्वराः” सन्ति। अतः तैत्तरीये उक्तं - “प्राण उद्गाता इति उद्गाता प्राणस्वरूपः। प्राणस्य का गतिरिति अन्नं भवति। अन्नं इति सम्भावयामः। “प्राणो वा अन्नम्” इति यजुर्वेदिनः। तर्हि “अन्नस्य का गतिः आपः” भवति। जलं विना अन्नं न भवति। तर्हि अस्य लोकस्य का गतिः स्वर्गं लोकपर्यन्तं लोक जलस्य स्थानं, स्वर्गादिन्द्रः वर्षादीन् लोके करोतीति प्रसिद्धम्। “स्वर्गं लोकं वयं सामभिः संस्थापयामः” इति वयं सामगाः स्वर्गल्लोकस्य संस्थापकाः इति आनन्ददायको विषयः आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति इति। सामवेदस्य स्वर्गलोकफलदायक इति स्वर्गं लोकं वयं सामभिः संस्थापयामः स्वर्गसंस्थावं हि साम। इति शम्।।

सन्दर्भाः-


1. छान्दोग्योपनिषत्
2. सामवेदः
3. सामविधानब्राह्मणम्
4. तैत्तिरीयब्राह्मणम्
5. भगवद्गीता


****

## 2.षड्विंशोक्त - अद्भुतशान्तिप्रकरणं प्रयोजनञ्च

**विद्वान् सुब्रह्मण्य गणपति भट्ट**
सहायक प्राध्यापकः, सामवेदः
महाराजा संस्कृतकालेजु, मैसूरु, कर्णाटकः

**विघ्नेशं विघ्नशान्त्यर्थं वाणीं वन्दे विभूतये**
**गुरुं गूढार्थबोधाय प्रणमामि निरन्तरम्।।**

षड्विंशब्राह्मणं सामवेदसम्बद्धं द्वितीयब्राह्मणम्। यतः "अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम्। षड्विंशाख्यं द्वितीयं स्यात् ततस्सामविधिर्भवेत्। आर्षेयं देवताध्यायो भवेदुपनिषत्ततः। संहितोपनिषद्वंशो ग्रन्था अष्टावुदीरिताः" इत्युक्तक्रमेण सामवेदे अष्टब्राह्मणानि सन्ति। तानि च क्रमशः प्रौढमित्युक्ते ताण्ड्यब्राह्मणम्-एवञ्च - षड्विंश - सामविधान - आर्षेय - देवताध्याय - उपनिषत्-संहितोपनिषत्-वंशाख्यानि। ब्राह्मणशब्दः अनेकार्थः सम्प्रति ग्रन्थवाची नपुंसकलिङ्गे भवति। तदुक्तं मेदिनीकोशे "ब्राह्मणं ब्रह्मसंघाते वेदभागे नपुंसकम्"। एतेन ब्राह्मणानां वेदभागत्वं सूचितम्। वेदमन्त्राणां विनियोगप्रकारम् अवगमयन्ति ब्राह्मणानि।

शाबरभाष्येपि- "हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः। परक्रिया पुराकल्पो व्यवधारणकल्पना। उपमानं दशैते तु विधयो ब्राह्मणस्य तु। इत्येवं प्रकारेण ब्राह्मणानां दशविधत्वं प्रोक्तम्"। ब्राह्मणवाक्यानि विशेषतः संहितामन्त्राणां विनियोगप्रकारं, विनियोगजन्यफलं च बोधयन्ति। यज्ञप्रक्रियायामस्योपयोगः परिदृश्यते। यतः मानवसन्ततेः श्रेयसे यज्ञाः प्रवृत्ताः इति विदितविषयः। उक्तं हि गीतायाम्-

**"अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः।।"**

(भ.गी. अ.3,श्लो.14)



अतः समस्तजीविनां सुखसाधनसमृद्धिप्राप्तये यज्ञाः अद्यतनावश्यककर्माणि। परन्तु आधुनिकेस्मिन् काले यज्ञाः निर्दिष्टसमुदायसम्बद्धाः इति प्रकारेण समुदायान्तरस्य अनादरस्य पात्रीभूताः। स्थितिरियं परिवर्तिता भूत्वा अध्ययनसम्पन्नैः श्रेष्ठविद्वद्भिः यज्ञाः यदि अनुष्ठीयन्ते तदा अस्य जगतः समस्याः अनेकाः परिहर्तुं शक्यन्ते। एतद्दृष्ट्या विचार्यमाणे प्रकृतं षड्विंशब्राह्मणे परिहारः दृश्यते। षड्विंशः ताण्ड्यब्राह्मणस्य अथवा पञ्चविंशब्राह्मणस्य अग्रिमो भाग एव। ताण्ड्यब्राह्मणे अग्निष्टोमसंस्थायाः आरभ्य ज्योतिष्टोमसहस्रसंवत्सरात्मकसोमयागाः क्रमेणोक्ताः। पूर्वोक्तप्रकारेण षड्विंशः ताण्ड्यशेष एव। अत्र ताण्ड्योक्तानामेव केषाञ्चित् कर्मणां भेदादिकं अनुक्तानां चाल्पीयसां कर्मणां स्वरूपं चेत्येषामेवात्र प्रतिपादनकारणात् ताण्ड्यशेष इति व्यवहारः।

ताण्ड्ये अविहिताः षड्विंशे विहिताः यागाः पञ्चैव। तेषां नामानि यथा- 1. श्येनयागः (अभिचारकफलकः) 2.इषुः, 3.सन्दशः, 4.वज्रः, 5.वैश्वदेवाख्यं त्रयोदशरात्रं सत्रम्। तदनन्तरं सायंप्रातस्सध्यानुष्ठानं, अद्भुतशान्तिश्च अन्तिमाध्यायद्वये उक्ते। आहत्य ब्राह्मणेस्मिन् षड् अध्यायाः सन्ति। प्रथमाध्याये सुब्रह्मण्यविधानमुक्तम्। द्वितीयाध्याये सप्तखण्डाः । तत्र प्रथम, द्वितीय, तृतीयखण्डेषु अग्निष्टोममध्ये बहिष्पवमानस्य रेतस्य धूर्गानयोः विवरणं ,चतुर्थखण्डे होतृ-अध्वर्यादि ऋत्विग्वरणं पंचम-षष्ठ-सप्तमखण्डेषु प्रातस्सवनादिषु सोमभक्षण विधिः विधीयते । तृतीयाध्याये नवखण्डाः । अत्र ऋत्विजां दोषे प्रायश्चित्तं योग्य-ऋत्विजां वरणं यज्ञोपयोगी प्रदेशः, अवभृथविवरणं विष्टुतिविवरणं च उक्तम् ।चतुर्थाध्याये षट् खण्डाः व्यूढ द्वादशाहादि वैश्वदेवसत्रपर्यन्तं उक्तम् । पञ्चमाध्याये सप्तखण्डाः । अत्र अग्निष्टोमयागस्य उत्पत्तिमारभ्य स्वाहादेवि विवरणान्तं अस्ति । अत्र विशेषतः सन्ध्याविषयः स्वाहाविषयश्च निरूपितः । षष्ठेऽध्याये द्वादशखण्डाः - अत्र विशेषतः अद्भुतशान्तिप्रकरणं निरूपितम् ।

प्रकृतसन्दर्भे उत्पद्यमानदुःशकुनादिपरिहारोपायः अत्र दृश्यते । प्रथमखण्डे - अथाऽतोऽद्भुतानां कर्मणां शान्तिं व्याख्यास्यामः (अ,6, ख,1,म.1)। पालाशानां समिधामष्टसहस्रं जुहुयात्। (अ,6,ख. 1.म. 2) तत्र देवताप्रकाशकामन्त्रान् दर्शयति -

ऐन्द्र - इन्द्रायेन्दो मरुत्वते

याम्य - नाके सुर्पणमुपयत्पतन्तम्

वारुण - घृतवती भुवनानाम्

धानद - अभित्यं देवं सवितारमोण्योः

आग्नेय- अग्निं दूतं वृणीमहे

वायव्य - वात आ वातु भेषजम्

सौम्य - सोमं राजानं वरुणम्

विष्णु - इदं विष्णुर्विचक्रमे

एतानि सामगानपुरःसरं अष्टोतरशतं प्रत्येकं जपित्वा पुण्याहं कुर्यादिति । तथा सति यजमानानां अनिष्टपरिहारद्धारेण मङ्गलं भवति।

द्बितीयखण्डे - पृथिव्यादिलोकविषये परस्परं स्पर्धमाना असुरेभ्यः देवाः प्रजापतिसमीपमागत्य परिहारं याचितवन्तः । तदा प्रजापतिः देवेभ्यः देवसंबन्धिनीं शत्रुक्रतोद्भव उपद्रवनिर्हरणसाधन-भूतां शान्तिं प्रायच्छत्। शान्तिहोमविवरणं - ते ततः शान्तीका इत्यादि मन्त्रद्वये श्रुतिः दर्शयति ।

तृतीयखण्डे - अत्र इन्द्राद्भुतशान्तिं, तत्र नियमः -स प्राचीं दिशमन्वावर्तते (अ,6,ख,3,म,1)। अथ यदास्य मणिमणिककुम्भ-स्थालीदरणमायासो राजकुलविवादो वा यानच्छत्रशय्यासनावसथ-ध्वजपताकागृहैकदेशप्रभञ्जनेषु गजवाजिमुख्या वाप्रमीयाः प्रमीयन्त इत्येवमादीनि तान्येतानि सर्वाणीन्द्रदेवत्यान्यद्भुतानि प्रायश्चितानि भवन्ति। (अ,6,ख,3,म,2) (मणिः हारादि सम्बद्धः तदादीनां भेदनं आयासः-चित्तपीडा ) एवं निमित्तानि दर्शयित्वा इन्द्रायेन्दो मरुत्वते



इत्यादि जपहोमेन तद्दोषपरिहारो भवतीति सूच्यते । चतुर्थखण्डे-याम्यनिमित्तविशेषे होमस्य निमित्तविशेषान् एवं दर्शयति-

अथ यदास्य प्रजायां पशुषु शरीरे वारिष्टानि प्रादुर्भवन्ति। व्याधयो वा अनेकविधा अतिस्वप्नमस्वप्नमतिभोजनमभोजनमालस्यं व्रणमजीर्णनिद्रा(जागरा)णीत्येवमादीनि । तान्येतानि सर्वाणि यमदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति (अ,6,ख,4,म,2)। एवं निमित्तविशेषे नाकेसुपर्ण इत्यादिना- होम-जपेन च तद्दोषपरिहारो भवति ।

पञ्चमखण्डे - क्षेत्रगृहादिषु इत्यन्नादा भवन्ति तदुक्ता इति तद्परिहारं सूचयति- अथ यदास्य क्षेत्रगृहसंस्थेषु धान्येष्वीतयः प्रादुर्भवन्ति । ईतयो वानेकविधाः — आखु-पतङ्ग- पिपीलिका- मध्वक-भौमक-शुक-शरभक-सौक्ष्मक-इत्येवमादीनि । तान्येतानि सर्वाणि वरुणदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति (अ,6,ख,5,म,2)। घृतवती इत्यादिना परिहारः ।

षष्टे खण्डे कनकादिवियोगे परिहारं दर्शयति। निमित्तदर्शनं यथा-अथ यदास्य कनकरजततवरवस्त्रवज्र-वैडूर्यमुक्तामणि-वियोगो भवति, आरम्भा वा विपद्यन्ते, अथवा अन्यानि क्रूराणि मित्राणि वा विरज्यन्ते । अरिष्टानि वा वयाँसि गृहमध्यासान्ते । वाल्मीकभौमानि वा जायन्ते । छत्राकं वोपजायते । मधूनि वा निलीयन्ते । इत्येवमादीनि । तान्येतानि सर्वाणि वैश्रवणदेवत्यान्यद्भुतानि प्रायश्चितानि भवन्ति इति ।(अ,6,ख,6,म,2) । तत्र अभित्यं देवं इत्यादिना परिहारः ।।

सप्तमखण्डे पृथिवीसम्बन्धि कम्पनादिनिमित्तपरिहारश्च निरुपितः । अत्र- अथ यदास्य पृथिवी तटती, स्फुटति, कूजति, कम्पति, ज्वलसि, रुदसि, धूमायति, अकस्मात्सलिलमुद्गिरति, प्लवन्न मज्जति, न निमग्नमुत्प्लवति, अकाले च पुष्पफलमभिनिर्वर्त्तत्यश्वत्तरीगर्भो जायते, यदा मज्जति, हस्तिनी, भूकम्पो जायते, प्रासादं भिनत्ति यत्र तत्र राजा विनश्यति गौर्गृहमारोहेद्ग्राममहिषीत्येवमादीनि तान्येतानि

सर्वाण्येग्निदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति (अ6-ख6-म-2) । अग्निं दूतं वृणीमहे इत्यादि - परिहारः। अस्मिन् अध्याये द्वादशखण्डपर्यन्तं अद्भुतकर्मणां शान्तिः निरूप्यते। प्रारम्भे उक्तरीत्या अथाऽतोऽद्भुतकर्मणां शान्तिं व्याख्यास्यामः। अथ इति इष्टप्राप्तिसाधनकर्मनिरूपणस्य प्रस्तुतत्वात् अद्भुतानां दैविकानाम् अनिष्टप्राप्तिसूचकानां कर्मणां तत्सूचितदोषनिर्हरणसाधारणात्मिकां शान्तिं विशेषेण वर्णयामः इति।

एतद्ग्रन्थविषयावलोकने तु वर्त्तमानप्रपञ्चे प्रवर्तमानानां नैकविधदुर्निमित्तानां परिहारः लब्धुं पार्यते इति ज्ञायते । किन्तु श्रद्धा अत्यन्तं आवश्यकी यतः शास्त्रे गुरुवाक्ये सत्यबुद्ध्या अवधारणा हि श्रद्धा खलु। अनिष्टानि तेषां परिहाराश्च सामवेदषड्विंशब्राह्मणे विशेषतया निरूपिताः। अद्यतनस्थितौ सम्भव्यमानान्यनिष्टानि सर्वथा अनेन परिहार्याणि इत्याशयः अस्य लेखनस्य। सर्वथा वेदानां वेदसम्बद्धब्राह्मणानां प्रधानाशयः अस्ति सर्वे भद्राणि पश्यन्तु इत्येव। शम्।।

****



# 3.सामवेदीयपञ्चाग्निविद्यापरिशीलनम्

**डा. रा.सुब्रह्मण्य भिडे**

सहाचार्यः,आपस्तम्बपौरोहित्यविभागः,
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपति

**पीठिका**

विदितमेवेदं भवतां समेषां "जन्तूनां नरजन्मदुर्लभम्" इत्यारभ्य, सोपानशः पुंस्त्वम्, विप्रता, वैदिकधर्ममार्गपरता, विद्वत्त्वं, आत्माऽनात्मविवेचनं, स्वनुभवः, ब्रह्मात्मना संस्थितिः, मुक्तिः इतिपर्यन्तम् । किन्तु, एवं सोपानानि आरोढुं प्रयतामहे वा ? उत तस्मिन्मार्गे साधकाः स्मो वा ? इत्यत्र प्रायशः नास्तीत्येव उत्तरं भवति ।

आचार्यशङ्करोक्त्यनुसारं, अस्मात् अविद्या - काम - कर्म-दुःखोदकात्, तीव्ररोग - जरा - मृत्यु - महाग्राहात्, विषयेन्द्रिय - जनित - सुखलवलक्षण - विश्रामात्, पञ्चेन्द्रियार्थ -तृण्मारुत-विक्षोभोत्थित - अनर्थशतमहोर्मेः, महारौरवादि-अनेक-निरयगत-हाहेत्यादि-कूजित-आक्रोशनोद्भूत-महारवात्, अनादेः, अनन्तात्, अपारात्, निरालम्बात्, सत्य - आर्जव - दान - दया - अहिंसा - शम - दम - धृत्यादि-आत्मगुण-पाथेयपूर्णज्ञानोडुपात्, महतः संसारसमुद्रात् बहिरागन्तुं (मुक्त्यर्थं) किमर्थं न यतेम ?

एतदर्थं साधनामार्गे, परमेश्वरे भगवति अनन्या भक्तिः, कर्मयोगः, उपनिषदुक्त-उपासनामार्गः, भगवत्तत्त्व(वेदान्त) चिन्तनरूप-संन्यासमार्गः, इत्येवं प्रकारेण बहवः अध्वानः सन्ति।

वयं सम्यक् आलोचयेम चेत्, अस्माकं जीवनं देहधारणात् पूर्वं, देहधारणप्रभृति देहत्यागपर्यन्तमपि दुःखभूयिष्ठं वर्तते। ततो दुःखात् मुक्ता वा ? न ।ततः नरकाद्युपभोगः, पुनः पाप-पुण्यानुसारं क्रिमि-कीट-मृग-पक्ष्यादितिर्यग्योनित्वम्, अथ वा स्थावरान्तं जन्मप्राप्तिः, (एतत्सर्वमपि निमेषकालप्रभृति सहस्रादिवर्षपर्यन्तं भवति) आहोस्वित्

पुण्य-पापमिश्रित-फलेन अत्यन्तं कष्टतरेण मनुष्यजन्मप्राप्तिः। अत एवोच्यते उपनिषदि - "दुर्निष्प्रपतरम्" इति ।

**पञ्चाग्निविद्या - विषयप्रवेशः**

साधनामार्गेषु उपासनामार्गोऽपि एकः पन्थाः इति पूर्वमुक्तम् । तत्र छान्दोग्योपनिषदि उपासनार्थं बह्व्यः विद्याः उक्ताः। तासु ओङ्कारोपासनविद्या, उद्गीथोपासनविद्या, साम्नः अवयवानां उपासनम्, गायत्र्यादिसाम्नाम् उपासनं, आदित्योपासनं, शाण्डिल्यविद्या, संवर्गविद्या, षोडशकलविद्या, उपकोसलविद्या, पञ्चाग्निविद्या, वैश्वानरविद्या, भूमविद्या, दहरोपासनं, इत्यादयः अनेका विद्या उक्ताः। प्रकृतं, अस्मिन् प्रबन्धे विषयत्वेन पञ्चाग्निविद्याविषयः गृह्यते ।

**पञ्चाग्निविद्यायाः कथासारः**

श्वेतकेतुर्नाम आरुणेयः पञ्चालजनपदानां सभामाजगम । तदा तत्र स्थितो राजा प्रवाहणो जैवलिः तमपृच्छत् । "अनुशिष्टोऽसि वा तव पित्रा ? इति । आम्, अहमनुशिष्टोऽस्मि इत्युत्तरं प्रादात् ।" तदा राजा तं पञ्च प्रश्नानपृच्छत्। 1. तत्र प्रथम प्रश्नः- अस्माल्लोकात् गता मनुष्याः कुत्र गच्छन्ति ? इति। 2. द्वितीयः- पुनः कथं प्रत्यावर्तन्ते ? इति। 3. तृतीयः — देवयान-पितृयाणमार्गौ कुत्र परस्परं वियुज्येते ? इति। 4.चतुर्थः - बहुषु प्रयुत्सु सत्स्वपि द्युलोकः केन कारणेन न सम्पूर्यते ? इति। 5.पञ्चमः- आपः पञ्चम्यामाहुतौ कथं पुरुषवचसो भवन्ति ? इति ।

सर्वस्य प्रश्नस्य "न वेद्मि" इत्येव उत्तरमासीत् श्वेतकेतोः । तदा प्रवाहणः तमनिन्दत् — किं भोः! अज्ञः सन् "अनुशिष्टोऽस्मि" इति कथं वदसि ? इति । एवं राज्ञा प्रवाहणेन आयासितः श्वेतकेतुः पितरमागत्य तात !माम् अनुशासनं अकृत्वैव समावर्तनकाले " त्वां अन्वशिषम् " इति कथमवदः? सः राजन्यबन्धुः मां पञ्च प्रश्नान् अप्राक्षीत् एकं प्रश्नमपि समाधातुमहं नाऽशकम्, इत्यवदत् ।



तदा पिता आरुणिरवोचत् — वत्स ! त्वं यथा न जानीषे तथैव अहमपि न जाने, अतः अन्यथाभावो न कर्तव्यः । अहं वेद्मि चेत्, प्रियाय भवते कथं नाऽवक्ष्यम् ? इति।

एवं स आरुणिरुक्त्वा, ततो राजस्थानमेयाय। आगताय ऋषये राजाऽपि सपर्यां कृत्वा, "मानुषवित्तं वृणीहि" इत्यवोचत् । तदा श्वेतकेतुपिता आरुणिः "हे राजन् ! मानुषं वित्तं तवैव भवतु, मम पुत्रसमीपे ये प्रश्नाः पृष्टाः तदुत्तरं मह्यं ब्रूहि" इति । एवमुक्तः सः "अप्रत्याख्येयो ब्राह्मण" इति मन्वानः कृच्छ्रीभूय, तेन चिरं ब्रह्मचर्यं चारयित्वा, अग्रजन्मना ब्रह्मचर्यचारणहेतोः क्षमां प्रार्थ्य विद्यां तस्मै उवाच । अत्र उपनिषदि पूर्वेषां चतुर्णां प्रश्नानामनन्तरं, पञ्चमः प्रश्नः **वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति** (छां.उ..5-3-3) इति यः पृष्टः तस्यैव प्रश्नस्य उत्तरमारभ्यते श्रुत्या ।

अत भाष्यकाराः शङ्करभगवत्पादाः एवं समादधति " पञ्चम्यामाहुतौ आपः" इत्ययं प्रश्नः प्राथम्येन अपाक्रियते, तदपाकरणमनु इतरेषामपाकरणं अनुकूलं भवेदिति । अग्निहोत्राहुत्योः कार्यारम्भो यस्स उक्तो वाजसनेयके। यथा- **तं प्रति प्रश्नाः— उत्क्रान्तिराहुत्योर्गतिः प्रतिष्ठा तृप्तिः पुनरावृत्तिर्लोकं प्रत्युत्थायी** (श.ब्र.11.6.2-4) इति । तेषां च अपाकरणं, उक्तं तत्रैव- **ते वा एते आहुती हुते उत्क्रामतः, ते अन्तरिक्षमाविशतः ते अन्तरिक्षमेव आहवनीयं कुर्वाते, वायुं समिधं, मरीचेव शुक्लामाहुतिं ते अन्तरिक्षं तर्पयतः ते तत उत्क्रामतः** (श.ब्रा.11.6.2-6) इत्यादि । एवमेव पूर्ववत् - **दिवं तर्पयतः ते तत आवर्तेते, इमामाविश्य तर्पयित्वा पुरुषमाविशतः। ततः स्त्रियमाविश्य, लोकं प्रति उत्थायी भवति** (श.ब्रा.11.6.2.7-10) इति । तत्र अग्निहोत्राहुत्योः कार्यारम्भमात्रं एवंप्रकारं भवतीत्युक्तम् । इह तु तं कार्यारम्भं अग्निहोत्रापूर्वविपरिणामलक्षणं पञ्चधा प्रविभज्य अग्नित्वेन उपासनम् उत्तरमार्गप्रतिपत्तिसाधनं विधित्सन्नाह -"असौ वाव लोको गौतमाग्नि"रित्यादि ।

**असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः** (छां.5.4.1) इति।

यथा आहवनीये अग्निहोत्रादिकरणं भवति । तद्वत् असौ द्युलोकः आहवनीयस्थानीयः । तस्य द्युलोकाख्यस्य अग्नेः आदित्य एव समित्, यतः आदित्येन इद्धः असौ लोकः दीप्यते, समिधः यथा धूम उत्तिष्ठति तथा समित्स्थानीयात् आदित्यात् रश्मयः उत्तिष्ठन्ति । अतः समिन्धनात् आदित्यः समित्स्थानीयः। रश्मयो धूमः। अहः अर्चिः प्रकाशसामान्यात्।चन्द्रमाः अङ्गाराः, अह्नः प्रशमे चन्द्रमा अभिव्यज्यते, यथा च - अर्चिषः प्रशमे अङ्गारा अभिव्यज्यन्ते।नक्षत्राणि विस्फुलिङ्गाः चन्द्रमसः अवयवा इव विप्रकीर्णत्वसामान्यात् ।

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति, तस्या आहुतेः सोमो राजा सम्भवति** ।। (छा.5.4.2) इति।

अस्मिन् द्युलोकाख्ये अग्नौ देवाः श्रद्धां जुह्वति, श्रद्धा नाम आपः। अत्र शङ्करभगवत्पादाः एवं विवृण्वन्ति- श्रद्धाम् अग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्माः आपः श्रद्धाभाविताः (सत्यः) श्रद्धाःइति उच्यन्ते । “पञ्चम्यामाहुत्यावापः पुरुषवचसो भवन्ति” (छां.5.3.3) इति अपां होम्यतया प्रश्ने श्रुतत्वात् । “श्रद्धा वा आपः। श्रद्धामेवारभ्य प्रणीय प्रचरति” (तै.ब्रा.3.2) इति च विज्ञायते इति । तामेतां श्रद्धारूपां अपः, देवताः द्युलोकाग्नौ जुह्वति। तस्याः आहुतेः हुतानां श्रद्धाशब्दवाच्यानां अपां परिणामः सोमो राजा सम्भवति ।

**अथ द्वितीयहोमपर्यायः**

**पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्लादनयो विस्फुलिङ्गाः** (छां.5.5.1) इति ।

हे गौतम ! पर्जन्य एव अग्निः वायुरेव तस्य समित्, अभ्रं धूमः, विद्युत् अर्चिः, पर्जन्यो नाम, वृष्टेः उपकरणाभिमानी देवताविशेषः। तस्य वायुरेव समित् - वायुना हि पर्जन्योऽग्निः समिध्यते । पुरोवातादिप्राबल्ये वृष्टेः दर्शनं श्रूयते श्रुत्यन्तरे –



**रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति, पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै** (तै.सं.2.4.9) प्रतिमीवतीत्यत्र प्रतिबध्नातीत्यर्थः। अन्यत्र च मन्त्रे **पुरोवातो वर्षन् जिन्वरावृत् स्वाहा** (तै.सं.2.4.7) इति ।

अत्रापि होममन्त्रे - यः पुरोवातः सः, वर्षन् वृष्टिं प्रवर्तयन्, जिन्वः - प्रजाः प्रीणयन्, आवृत् आवर्तताम् इत्यर्थः। (तस्य पर्जन्याग्नेः) अभ्रं धूमः, धूमकार्यत्वात्, धूमवच्च लक्ष्यतेऽपि। विद्युत् अर्चिः, प्रकाशः समानं भवति उभयोः। अशनिः अङ्गाराः, काठिन्यात्, विद्युत्सम्बन्धाद्वा । ह्लादनयः विस्फुलिङ्गाः। ह्लादनयः मेघानां गर्जितशब्दाः, ह्लादनिः विस्फुलिङ्गश्च विप्रकीर्णत्वसमानतां भजतः।

**तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति । तस्या आहुतेर्वर्षं सम्भवति** (छां.5.5.2) इति।

अस्मिन् पर्जन्याग्नौ देवाः सोमं राजानं जुह्वति । तस्या आहुतेः कारणात् वर्षं सम्भवति । श्रद्धाख्या आपः सोमाकारपरिणताः द्वितीये पर्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन परिणमन्ते ।

**अथ तृतीयहोमपर्यायः**

**पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोङ्गारा अवान्तरदिशो विस्फुलिङ्गाः** (छां5.6.1) इति।

हे गौतम! पृथिवी एव अग्निः। तस्य पृथिव्याख्यस्य अग्नेः संवत्सर एव समित् । कालरूपेण संवत्सरेण हि समिद्धा पृथिवी व्रीह्यादि निष्पत्तये समर्था भवति । आकाशः धूमः,यथा अग्नेः धूमः उत्थितो दृश्यते, तद्वत् आकाशः पृथिव्या उत्थित इव दृश्यते। रात्रिः अर्चिः, अप्रकाशात्मिकायाः पृथिव्या अनुरुपा रात्रिः । दिशः अङ्गाराः, उपशान्तत्वसामान्यात्। अवान्तरदिशः विस्फुलिङ्गाः क्षुद्रत्वसामान्यात् ।

**तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति। तस्या आहुतेरन्नं सम्भवति।** (छां.5.6.2) इति।

तस्मिन् पृथिव्यग्नौ देवाः वृष्टिं जुह्वति । तस्या आहुतेः कारणात् अन्नं व्रीहियवादि सम्भवति इति।

**अथ चतुर्थहोमपर्यायः**

**पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः** (छां.5.7.1) इति।

हे गौतम ! पुरुष एव अग्निः। तस्य पुरुषाग्नेः वागेव समित्। पुरुषः वाचा हि मुखेन समिध्यते, न मूकः। प्राणो धूमः। धूम इव मुखात् निर्गमनात्। चक्षुः अङ्गाराः कान्तेः आश्रयत्वात्। श्रोत्रं विस्फुलिङ्गाः विप्रकीर्णत्वसामान्यात्।

**तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति** (छां.5.7.2) इति।

एतस्मिन् पुरुषाग्नौ देवाः व्रीह्यादि संस्कृतं अन्नं जुह्वति । तस्याः आहुतेः कारणात् रेतः सम्भवति ।

**अथ पञ्चमहोमपर्यायः**

**योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तःकरोति तेऽङ्गारा अभिनन्दाः विस्फुलिङ्गाः** (छा.5.8.1) इति।

हे गौतम! योषा एव अग्निः। तस्य योषाग्नेः उपस्थ एव समित्, यतः तेन उपस्थेन सा पुत्राद्युत्पादनाय समिध्यते । यदुपमन्त्रयते सः धूमः। स्त्रीसम्भवात् उपमन्त्रणस्य । योनिः अर्चिः लोहितत्वात्। यदन्तः करोति ते अङ्गाराः अग्निसम्बन्धात् । अभिनन्दाः सुखलवाः विस्फुलिङ्गाः, क्षुद्रत्वात् इति।

**तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति, तस्या आहुतेर्गर्भः सम्भवति** (छां.5.8.2) इति।

अस्मिन् योषाग्नौ देवाः रेतो जुह्वति । तस्याः आहुतेः कारणात् गर्भः सञ्जायते ।।



अत्रेदं विचार्यते - "पुरुषो रेतो जुहोति" इति न्याय्यम्, कथञ्चित् पूर्वतनेषु होमेषु देवकर्तृकत्वं अनुमिनुयाम । योषाग्नौ तु रेतोरूपेण होमः अवश्यं पुरुषकर्तृकत्वं भवति खलु? इत्यत्र इत्थं समाधातुं शक्यते। यथा - सर्वस्मिन्नपि कर्मणि वयं निमित्तमात्रं भवेम । इन्द्रियगोलकेषु सत्स्वपि कस्यचित् श्रवणं, दर्शनं, इत्यादिका ज्ञानक्रिया न सम्भवति अतः **अग्निर्वाग्भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यः चक्षुर्भूत्वा अक्षिणी प्राविशत्** (ऐ.उ.1.12)

इत्येवं प्रकारेण तत्तदिन्द्रियाधिष्ठितानां देवतानाम् अनुग्रहः आवश्यक एव ।

मनुष्याणामस्माकं निमित्तत्वे उपलक्षणत्वेन कानिचन श्रुति-स्मृति वाक्यानि प्रदर्श्यन्ते, यथा आध्वर्यवे कर्मणि दर्भसंनहनकाले **"पूषा ते ग्रन्थिं ग्रथ्नातु" "इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे" "बृहस्पतेर्मूर्ध्ना हरामि"** (तै.सं.1.1.2)

इति दर्भाणां ग्रन्थिग्रथन-उद्यमन-हरणकर्मसु पुरुषकर्तुत्वे सत्यपि देवकर्तृकत्वं स्मारयति श्रुतिः। अन्यत्र च निर्वपणकाले प्रतिग्रहकाले च

**देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। अग्नये जुष्टं निर्वपामि** (तै.सं.1.1.4) इति।

तथा – **"देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्यां प्रतिगृह्णामि** (तै.आ.3.10) इति च ।

गीतासु च भगवदुक्तिः **"निमित्तमात्रं भव सव्यसाचिन्"** (भ.गी.11.33) इति।

अत्र योषाग्निहोमे अस्माकं निमित्तत्वविषये गर्भाधाने अभिमन्त्रणमन्त्रेष्वपि एवं श्रूयते -

**विष्णुर्योनिं कल्पयतु त्वष्टा रुपाणि पिंशतु । आसिञ्चतु प्रजापतिः, धाता गर्भं दधातु ते** (ए.कां.1.13) इति ।

अतः वस्तुतः अस्मदधीनं किञ्चिदपि कार्यं न भवति, स्थूलदृष्ट्या तु सर्वापि क्रियाः अस्मदिच्छानुसारं प्रवर्तत इव लक्ष्यते । अस्मदन्तःशरीरेऽपि सर्वा अपि क्रियाः अस्मदिच्छानुसारं न प्रवर्तन्ते । अतः प्रसङ्गादिदमुच्यते -

"सर्वं भगवदधीनम्" इति मत्वा, अहन्तां ममतां च विहाय कर्मयोगदृष्ट्या व्यवहरेत् । व्यवहारकाले च केचन क्लेशाः यदा सम्भवन्ति तदा व्यवहारदृष्ट्या तान् परिहरेत् इति। एवञ्च पूर्वोक्त प्रकारेण श्रद्धा-सोम-वर्ष-रेतो-हवनपर्यायेण ता आप एव गर्भिभूता भवन्ति इति ।

इत्थं, **वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति** (छां.5.3.3) इति पूर्वं पृष्टस्य प्रश्नस्य उत्तरं वक्ष्यमाणप्रकारेण दत्तमस्ति श्रुत्या - **इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति, स उल्बावृतो गर्भो दश वा नव वा मासानन्तःशयित्वा यावद्वाऽथ जायते** (छां.5.9.1) इति।

अत्र "भवन्ती"त्येतावत्पर्यन्तं उत्तरम् । ततः परं **स उल्बावृतो गर्भो दश वा नव वा मासान् अन्तः शयित्वा** इत्यादिना वैराग्यहेतोः उच्यते -

श्रद्धाशब्दवाच्यानां अपां, पञ्चमः परिणामविशेषः सः गर्भः जरायुणा आवृतः मातुरुदरे दश वा नव वा मासान् शयित्वा ततो जायते । तत्र मूत्र-पुरीष-वात-पित्त-श्लेष्मादिभिः पूर्णे मातृकुक्षौ मूत्र-पुरीषादिलिप्तस्य, अशुचिना जरायुणा आवृतस्य, लोहितरेतोऽशुचि-बीजस्य, मात्रा अशित-पीत-रसानुप्रवेशेन विवर्धमानस्य, निरुद्ध-शक्ति-बल-वीर्य-तेजः-प्रज्ञा-चेष्टस्य, ततो योनिद्वारेण बाधापूर्वकं कष्टतरा निःसृतिः(जन्म) इति श्रुतिः वैराग्यं ग्राहयति ।

इममेवांशं शङ्करभगवत्पादाः स्वकीये शिवापराधक्षमापनस्तोत्रे इत्थं वदन्ति - **आदौ कर्मप्रसङ्गात्कलयति कलुषं मातृकुक्षौ स्थितं माम्। विण्मूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः।** इति ।



एवं सम्यक् विचारिते मुहूर्तमपि असह्यं दश वा नव वा मासान् अतिदीर्घकालं कथं सोढुं शक्यते । अत एवं चिन्त्यते — सर्वे अपि जन्तवः जीविकायाः आरम्भे एव अण्डमध्य उल्बमध्ये वा निबद्धाः निरुद्धाः सन्तः कारागारवासापेक्षया अत्यन्तं कष्टं वासं कृत्वैव बहिरागच्छन्तीति । इदं चिन्तनं परिहासमात्रं न । यतः अस्मिन्नर्थे ऐतरेयोपनिषदि वामदेवऋषेः चिन्तनं एवं प्रकटितं वर्तते - **गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।**

**शतं मा पुर आयसीररक्षन् अधः श्येनो जवसा निरदीयमिति ।।** (ऋ.सं.4.27.1) **गर्भ एवैतच्छयानो वामदेव एवमुवाच।** (ऐ.उ.2.5) इति।

मन्त्रस्य अयं भावः - मातृगर्भाशये सन् अनेकजन्मान्त-भावनापरिपाकवशात् (वागग्न्यादीनां सर्वाणि जन्मानि, अन्ववेदम्) अहं अहो अनुबद्धवानस्मि । मां बह्व्यः आयस्यः पुरः अरक्षन् । अथ अहं आत्मज्ञानकृतसामर्थ्येन श्येनः जालं भित्वा इव निर्गतोऽस्मि । इति ।

केवलं एतावदेव न - **स जातो यावदायुषं जीवति, तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति, यत एवेतो यतः सम्भूतो भवति** (छां.5.9.2) इति। अत्र भाष्यकाराः शङ्करभगवत्पादाः वदन्ति - स एव (पूर्वोक्तरीत्या अत्यन्तं कष्टतया) जातः यावदायुषं पुनः पुनः घटीयन्त्रवत् गमनागमनाय, कुलालचक्रवद्वा तिर्यग्भ्रमणाय, यावत् कर्मणोपात्तमायुः तावज्जीवति इति ।

पूर्वं तावत् जैवलिप्रवाहणेन **वेत्थ यदितोऽधि प्रजाः प्रयन्तीति** (छां.5.3.2) अस्माल्लोकात् गता मनुष्याः कुत्र गच्छन्ति ? इति यः प्रथमप्रश्नः पृष्टः तस्य उत्तरं वदति श्रुतिः। [तत्र विभागद्वयं वर्तते, यथा द्युलोकाद्यग्निभ्यः वयं क्रमेणजाताः, अग्निस्वरूपाः, पञ्चाग्न्यात्मानः इत्येवं विदुः अर्थात् उपासकाः, पञ्चाग्निविदो गृहस्था वानप्रस्थाः परिव्राजकाश्च। अन्ये अनित्थंविदः केवलेष्टापूर्तदत्तपराः कर्मिणः गृहस्थाः। तत्र उपासकानां देवयानः पन्थाः, केवलकर्मिणां पितृयाणः पन्थाः इति व्यवस्था।]

देवयानः पन्था इत्थं वर्तते— **तद्य इत्थं विदुः। ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहः, अह्न आपुर्यमाणपक्षं, आपूर्यमाणपक्षात्, यान् षडुदङ्डेति मासांस्तान् । मासेभ्यः सँवत्सरं, संवत्सरादादित्यं, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति एष देवयानः पन्था इति** (छां.5-10-1,2)

एवं अर्चिरादि विद्युदन्ताभिमानिदेवतां क्रमशः प्रतिपद्य, विद्युल्लोके स्थितानेनान् दिव्यः पुरुषः आगत्य ब्रह्मलोकं गमयति, अयं देवयानो मार्गः।। एषां उपासनातारतम्यात् विविधस्थानप्राप्तिः सम्भवति ।

अन्यः पितृयाणमार्गः एवमस्ति— **अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसम्भवन्ति, धूमाद्रात्रिं, रात्रेरपरपक्षान्, यान् षड्दक्षिणैति मासांस्तान्, नैते संवत्सरमभि प्राप्नुवन्ति । मासेभ्यः पितृलोकं, पितृलोकादाकाशं, आकाशाच्चन्द्रमसं, एष सोमो राजा, तद्देवानामन्नं, तं देवा भक्षयन्ति ।** (छां. 5.10.3.4) इति ।

इत्थं देवयान-पितृयाण-मार्गद्वयाख्यानेन "इतो गता जना कुत्र गच्छन्ती"त्यस्य प्रथम प्रश्नस्य उत्तरं दत्तम्। **तथैव वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना** 3 इति च (छां.5.3.2) यस्तृतीयः प्रश्नः पृष्टः तस्यापि उत्तरं दत्तमस्ति ।

अत्र सोमो राजा देवानामन्नं, तं देवा भक्षयान्तीत्युक्तम् - तत्रेत्थं विचार्यते शङ्करवाक्यानुसारम् - "अन्नम्" इति उपकरणमात्रस्य विवक्षितत्वात्, कबलोत्क्षेपवत् देवाः न भक्षयन्ति । किं तर्हि, यथा स्त्रियः पुरुषाणां, पशवः जनानां, जनाः राज्ञां उपभोगा भवन्ति तथा एते कर्मिणोऽपि देवानां उपभोगा भवन्ति।

श्रद्धाशब्दा आपः, द्युलोकाग्नौ हुताः सोमो राजा सम्भवतीति पुरस्तात् यदुक्तम्, ता आपः कर्मसमवायिन्यः इतरैश्च भूतैरनुगताः



द्युलोकं प्राप्य, चन्द्रत्वमापन्नाः चन्द्रमण्डले सुखोपभोगयोग्यं अम्मयं शरीरं आरभ्यन्ते ।

इतश्च गमनमेवं भवति । अन्त्यायां शरीराहुतौ, अग्नौ हुतायाम्, अग्निना दह्यमाने शरीरे, तदुत्था आपः धूमेन सह ऊर्ध्वं यजमानमावेष्ट्य, चन्द्रमण्डलं प्राप्य, कुशमृत्तिकास्थानीया (नाम भित्तिस्थानीया) बाह्यशरीरारम्भिका भवन्ति। तदारब्धेन च शरीरेण, यावत् इष्टादिफलभोगनिमित्तस्य कर्मणः क्षयः भवति, तावत् तत्फलमुपभुञ्जाना आसते ।

इदानीं यत् पूर्वं **"वेत्थ यथा पुनरावर्तन्त 3"** इति यो द्वितीयः प्रश्नः पृष्टः तस्य उत्तरं दीयते श्रुत्या- **तस्मिन् यावत्सम्पातमुषित्वा, अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशं, आकाशाद्वायुं, वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रं भवति। अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति, त इह व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्ते, अतो वै खलु दुर्निष्प्रपतरं, यो यो ह्यन्नमत्ति, यो रेतः सिञ्चति तद्भूय एव भवति ।** (छां 5.10,5,6) इति।

अत्र दुर्निष्प्रपतरम् इत्यनेन मनुष्यदेहप्राप्तिः अत्यन्तं कष्टमित्युक्तं भवति। यतः "मेघो भूत्वा प्रवर्षति" इत्यनन्तरं वर्षधाराः कुत्राऽपि वा पतेयुः यथा गिरितर-दुर्ग-नदी-समुद्र-अरण्य-मरुदेशेषु । तत्र गिरितटात् उदकप्रवाहेण उह्यमानाः नदीं प्राप्नुवन्ति, ततः समुद्रं, ततः मकरादिभिः भक्ष्यन्ते, तेच मकरादयः अन्येन भक्ष्यन्ते। अपि च मकरादिभिः सह तत्रैव समुद्रे विलीनाः, मेघैः समुद्रजलेभ्यः आकृष्टाः पुनः वर्षधाराभिः मरुदेशे, अगम्ये शिलातटे वा, पतितास्तिष्ठेयुः। कदाचित् व्यालमृगादिभिः पीताः अन्यैः व्यालमृगदिरूपेण भक्षिताः तेऽपि अन्यैर्भक्षिताः, इत्येवं प्रकारेण परिवर्तेरन् । कदाचित् अभक्ष्येषु स्थावरेषु (नाम तरुगुल्मलतादिषु) (जाताः) स्थिताः तत्रैव शुष्येरन् । भक्ष्येषु स्थावरेष्वपि (जातानां) स्थितानां, स्थावराणां बहुत्वात् रेतःसिचः पुरुषस्य देहसम्बन्धः दुर्लभ एव इत्यतः दुर्निष्प्रपतरं

दुर्निर्गमतरं (दुर्निष्क्रमणत्वं) इति, अयमेकोऽर्थः। अन्यार्थः कैमुतिकन्यायवत्, ब्रीहियवादिभाव एव दुर्निर्गमतरः। तस्मात् दुर्निष्प्रपतात् ब्रीहियवादिभावात् अपि रेतसिग्देहसम्बन्धः दुर्निष्प्रपततरः, यतः अन्नादानाम् अनेकत्वात् "ऊर्ध्वरेतोभिः बालैः पुंस्त्वरहितैः स्थविरैर्वा भक्षिताः अन्तराले शीर्यन्ते । इदानीन्तनकाले प्रजाभिः नैकधा व्यर्थीक्रियते स्वरेतः। अपि च कोटिषु वीर्याणुषु एक एव वीर्याणुः स्त्रियाः अण्डं संगच्छत इति प्रसिद्धम्। तस्मादपि दुर्निष्प्रपततरम्।

कदाचित् काकतालीयन्यायेन रेतःसिग्भिः पुरुषैः यदा भक्ष्यन्ते, तदा तेषां अनुशायिनां रेतःसिग्भावं गतानां, कर्मणो वृत्तिलाभः । तदुच्यते "यो यो ह्यन्नमत्ति" इत्यादिना – अनुशयिभिः संश्लिष्टम् अन्नं यो यो अत्ति, यश्च रेतःसिक् ऋतुकाले स्वयोषिति रेतः सिञ्चति तदाकृतिरेव भवति । तदवयवाकृतिभूयस्त्वं रेतोरूपेण योषितः गर्भाशये अन्तःप्रविष्टः अनुशयी, मन्त्रे "भूयः" इत्युच्यते। अतः पुरुषात् पुरुषो जायते, गोः गवाकृतिर्जायते, न जात्यन्तराकृतिः । इदानीं पुरस्तात् केन कारणेन द्युलोकः न सम्पूर्यत? इति यश्चतुर्थः प्रश्नः पृष्टः तस्य उत्तरं ददाति वक्ष्यमाणा श्रुतिः तत्प्रश्नसम्बद्धविषयान्तरं प्रस्तौति -

**तद्य इह रमणीयचरणा अभ्याशो ह यत्, ते रमणीयां योनिमापद्येरन्, ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्, ते कपूयां योनिमापद्येरन्, श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा** (छां 5.10.7) इति।

अनुशयिनां मध्ये ये इह लोके शोभनशीलाः ये आसन्, ते चन्द्रमण्डले भुक्तशेषेण पुण्येन, अत्र क्रौर्य-अनृत-माया-वर्जितां योनिं प्राप्नुवन्ति। ये तु कुत्सितशीलाः आसन् ते, धर्मसम्बन्धवर्जितां जुगुप्सितां श्व-सूकरेत्यादियोनिं स्वकर्मानुसारं प्राप्नुवन्ति।



**अकर्मिणाम् अनुपासकानां गतिः**

पूर्वं जैवलिप्रवाहणेन चतुर्थप्रश्नरूपेण **वेत्थ यथाऽसौ लोको न सम्पूर्यत 3 इति** (छां.5.3.3) यः प्रश्नः पृष्टः तस्य उत्तरं दीयते श्रुत्या **– अथैतयोः पथोः न कतरेण च न तानीमानि क्षुद्राणि असकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं, तेनाऽसौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः** (छां.5.10.8) इति।

ये तु रमणीयचरणाः द्विजातयः ते स्वकर्मस्थाः इष्टादिकारिणश्चेत्, ते धूमादिगत्या गच्छन्ति, पुनः पुनः घटीयन्त्रवत् आगच्छन्ति च। विद्यां प्राप्नुयुश्चेत् तदा अर्चिरादिना गच्छन्ति। ये तु न विद्यासेविनः, नाऽपि इष्टादिकर्म सेवन्ते, ते यथोक्तयोः अर्चिर्धूमादिलक्षणयोः पथोः अन्यतरेणाऽपि च पथा न यन्ति। ते दंश-मशक-कीटादीनि असकृदावर्तीनि क्षुद्राणि भूतानि भवन्ति। अतः उभयमार्गपरिभ्रष्टाः असकृत् जायन्ते म्रियन्ते च । तेषां जनन-मरण-सन्ततेः अनुकरणार्थम् इदमुच्यते **"जायस्व" "म्रियस्व"** इति। जनन-मरणक्षणेनैव कालयापना भवति, न तु शोभनासु क्रियासु शोभनेषु भोगेषु वा कालोऽस्तीत्यर्थः। एतत् क्षुद्रजन्तुलक्षणं पूर्वोक्तौ पन्थानौ अपेक्ष्य, संसारिणाम् एतत् क्षुद्रजन्तुलक्षणं तृतीयं स्थानम् ।

यत एवं कष्टरूपेण संसारगतिः तस्माज्जुगुप्सेत । यस्माच्च जन्म-मरण-जनित-वेदनानुभव-कृतक्षणाः क्षुद्रजन्तवः अगाधे अप्लवे सागरे इव, ध्वान्ते च घोरे दुस्तरे संसारे प्रवेशिताः उत्तरणं प्रति निराशाः तस्मात्, एवंविधां कष्टां संसारगतिं दृष्ट्वा "मा भूदेवंविधे संसारमहोदधौ घोरो पातः" इति बीभत्सेत् ।

**पञ्चाग्न्युपासकानां फलम्-**

**"स्तेनो हिरण्यस्य, सुरां पिबंश्च, गुरोस्तल्पमावसन्, ब्रह्महा च एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति। अथ ह य एतानेवं पञ्चाग्नीन् वेद न सह तैरप्याचरन् पाप्मना लिप्यते, शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ।** (छां.5.10.9-10)

ब्राह्मणसुवर्णस्य हर्ता, ब्राह्मणः सन् सुरां पिबन्, गुरुतल्पं गच्छन्, ब्राह्मणहन्ता च इत्येते चत्वारः पतन्ति । तैः सह आचरन् पञ्चमश्च पतति। अथ पुनः यः यथोक्ताम् पञ्चाग्नीन् वेद, सः महापातकिभिः सह आचरन्नपि पाप्मना न लिप्यते, शुद्ध एव भवति। पञ्चाग्निदर्शनेन पावितः पूतः(एव) भवति । पुण्यः प्राजापत्यादिः लोकः यस्य सोऽयं पुण्यलोकः भवति । य एवं वेद इति, यथोक्तं पञ्चभिः प्रश्नैः पृष्टं समस्तं अर्थजातं वेद इति।

एवञ्च पूर्ववर्णितां घोरां संसारगतिं, "जन्तूनां नरजन्मदुर्लभम्" इत्यादिवाक्यजातं च मनसि निधाय, "सर्वे परमात्मज्ञानैकलक्ष्यया, प्राप्तं मानुषं जन्म सार्थीकुर्वन्तु" इति आशास्य इमं प्रबन्धं उपसंहरामि ।

****



# 4.आधुनिकसमाजे सामवेदस्य प्रासङ्गिकता

डॉ गिरिजाप्रसाद षडङ्गी
सहाचार्यः,सामवेदविभागः
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपति
gpshadangi@gmail.com,

आधुनिकसमाजः बहिर्मुखतया दिनं प्रतिदिनं क्षिप्रेण प्रवर्धते। तत्र समाजस्याभिवृद्ध्यै यानि वस्तूनि आवश्यकानि तानि नूतनरूपेण निर्मीयन्ते। यथा स्थातुं गृहम्, भोक्तुं अन्यव्यञ्जनानि, पठितुं पुस्तकाद्युपकरणानि, श्रोतुं श्रवणयन्त्राणि, वक्तुं ध्वनियन्त्राणि, गन्तुं वाहनानि, एतादृशानि सर्वाण्यपि वस्तूनि नित्यं परिवर्तन्ते। तेषु वस्तुषु जनानां आदरोऽपि नितरामभिवर्धते। एतादृशपरिवर्तनशील-जगति "जनानामुपकाराय सामवेदः कथमुपयोक्तुं योग्यः" इति अत्र विचार्यते। ततः पूर्वं तस्य मूलरूपं कथमस्ति ? वाङ्मयस्य उपलब्धिः अनुपलब्धिश्च कथं वर्तते ? तत्र वर्णिविषयाः के सन्ति ? तेषामुपयोगः कथं करणीयः ? अनेन समाजस्य को लाभ इत्येवमत्र विभिन्नदृष्ट्या परिशील्यते।

अस्य मूलरूपन्तु मन्त्रद्रष्टृभिः तपसा ज्ञातः महान् शब्दराशिः वेदरूपः। ऋषिभिः दृष्टे ऋक्सामयजुस्समूहात्मके शब्दराशौ इदानीन्तनप्रजाभिः अध्येतुं व्यासमहर्षिभिः व्यस्तः केवलसामसम्बद्धः मन्त्रराशिः सामवेदत्वेन गण्यते।

तस्य श्रुतिरुपेण अनूचानाध्ययनम्-

**"आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम्। विद्या सन्धिः। प्रवचनं सन्धानम् । इत्यधिविद्यम् "।**

इत्युक्तप्रकारेण गुरूच्चारणपूर्वकं शिष्यानुच्चारणमध्ययनं भवति। अध्ययनकाले च उभयोः सामरस्यं सौमनस्यं च भवति। एवं वेदस्य श्रुतिमूलकत्वं सिद्धम्। इतः पूर्वं वेदः अध्ययनपरम्परारूपेण, लेखनरूपेण तालपत्ररूपेण च आसीत्। इदानीं काले तु पुस्तकरूपेण श्रव्य-दृश्यरूपेण ध्वनिमुद्रिकादिभिश्च संरक्षितो वर्तते।

**सामवेदीयप्रकाशितग्रन्थाः-**

सामवेदसंहिता, राणायनीयगानसंहिता, कौथुमगानसंहिता, जैमिनीयसामगानम्, ऊहरहस्यम्, जैमिनीय ऊह-ऊषाणी, पदपाठः, एकादशब्राह्मणानि-ताण्ड्य-षड्विंश-सामविधान-देवताध्याय-मन्त्र-ब्राह्मण-आर्षेय-वंश-संहितोपनिषद- जैमिनीमहाब्राह्मणं- जैमिनीयार्षेयोपनिषद्ब्राह्मणानि, छान्दोग्य-केनोपनिषदौ, ऋक्तन्त्रं, सामतन्त्रं, पुष्पसूत्रं, तस्य व्याख्यानरूपं फुल्लपोतम्, लघुऋक्तन्त्रसंग्रहः, गौतमधर्मसूत्रं, गोभिल-खादिर-जैमिनीयगृह्यसूत्राणि, सामवेदभाष्यं, पूर्वापरप्रयोगः, अक्षरतन्त्रम्, अवग्रहसूत्रम्, आर्षेयकल्पः, आर्चिक-लक्षणम्, आर्चिक-छलाक्षरं, पद-छलाक्षरं, हितवाक्यं, सामप्रकाशः, कर्मप्रदीपः, जैमिनीयश्रौतसूत्रवृत्तिः, क्रतुसंग्रहकारिका, कल्पकारिका, क्रतुमाला, कौथुमगृह्यं, खादिरगृह्यसूत्रं, गायत्रविधानसूत्रं, गौतमीयशिक्षा, नारदीयशिक्षा, लोमशीयशिक्षा, गौतमधर्मसूत्रं, गृह्यपरिशिष्टं, गोभिलगृह्यसूत्रं, गोभिलगृह्यकर्मप्रकाशिका, छन्दोविचितिः, प्रतिहारसूत्रं, मात्रालक्षणं, रहस्यसामप्रकाशः, लाट्यायनश्रौतसूत्रम्, वामनकारिका, आर्षेयदीपः, सामसूक्तमञ्जरी, सामवेदमहान्यासः, सामवेदरुद्रजपविधिः, सप्तलक्षणं, सर्वानुक्रमणी, शाट्यायनकारिका, क्षुद्रकल्पसूत्रं, पञ्चविधसूत्रम्, स्तोभभाष्यम्, सामवेदीयरुद्रसंहिताभाष्यम्, गौतमीयापरसूत्रप्रकाशः, सामसार-सर्वस्वम्, सन्ध्यावन्दनम्, उपाकर्मप्रयोगः, श्राद्धप्रयोगः, सामवेदीय-संस्कारशान्तिप्रयोगः, सामदीपः, सग्रहमुखशान्तिप्रयोगः, प्रातिसांव-त्सरिकश्राद्धप्रयोगः, त्रयीपरिचयः, सामवेदसस्वरभाषाभाष्यम्, सामवेदगानब्राह्मणभाषाभाष्यम्, सामस्मार्तप्रयोगमञ्जरी इत्यादिग्रन्थाः देवनागर्यां लिप्यां प्रकाशिताः सन्तः लोके उपलब्धाः सन्ति।

**सामवेदीय-अप्रकाशितग्रन्थाः -**

अनुपदसूत्रम्, उपग्रन्थसूत्रम्, उपनिदानसूत्रम्, उद्गीथसूत्रम्, सामप्रकाशिका, ऊहभाष्यम्, उहसामपरिगणनम्, औक्थिक्यम्,



कल्पानुपदसूत्रं, गीतिकल्पपरिशिष्टं, गौतमसूत्रपरिशिष्टं, गृह्यासंग्रहः, ग्रन्थसारशिक्षा, गौतमस्मृतिः, छलप्रक्रिया, छलाक्षरकारिका, छन्दोगप्रयोगदीपिका, छन्दोगऋक्स्वरलक्षणं, नैगम्, पितृमेधसूत्रं, पितृमेधकारिका, प्रयोगमणिदर्पणं, पुरुषोत्तमभट्टीयम्, पादविधानम्, ऋक्कारिका, ऋक्पदलक्षणम्, ऋङ्गिनघातकारिका, पूर्वोत्तरोभयदीर्घी, रावणभेट्, वर्णक्रमरत्नम्, आर्षेयप्रदीपः, स्तोभानुसंहारः, सामसंग्रहः, सामस्वरनिर्णयः, सायणीयसामसंबन्धिश्लोकसंग्रहः, शर्य्याप्रयोगः, तन्दालक्षणम्, धारिलक्षणम्, श्रौतकारिका, श्रीनिवासदीक्षितीयम्, सामवेद औद्गातृप्रयोगः, श्रौतप्रयोगः इत्येवमादिषु ग्रन्थेषु केचन ग्रन्थाः अप्रकाशिताः, केचन ग्रन्थाः ग्रन्थ-तिक्लारि-इत्यादिषु लिपिषु प्रकाशिताश्च वर्तन्ते। एतेषु केषाञ्चन ग्रन्थानां देवनागरी लिप्यां प्रकाशनाभावात् लोके सम्यक् प्रसारणं न विद्यते।

**वर्णितविषयाः-**

सामवेदसंहिता पद्यात्मकं गानात्मकं च द्विविधा भवति। पद्यात्मकं सामवेदसंहिता 1875 मन्त्रात्मिका। तथा गानात्मिका गानसंहिता 2634 सामात्मिका। अत्र अग्नि- इन्द्र- पावमान देवतासम्बन्धि मन्त्राणां तथा अर्क-द्वन्द्व-व्रत-शुक्रियपर्वसु, इन्द्र-वरुण-सूर्य-चन्द्र - लक्ष्मी - मरुत् - रुद्र - वैश्वानर - सोम - प्रजापतिसामानि, द्यु-अन्तरिक्ष-भू-वलभिद्-उद्भिद्-यश-धेनु-घर्म-धर्म-विधर्म-पयो-ज्योतिर-पत्य-आयु-भद्र- धन-द्रविण-अपां सामानि, समुद्रस्थसर्पाणां साम, शान्तिसाम, स्वर्गप्राप्तये, प्राणापानौ वृद्ध्यर्थे, वाक्प्राप्त्यर्थं, गवामभिवृद्धये सामानि, सभासदप्रशंसा, अग्निवायुवैश्वानरादिव्रतम्, शिर-स्कन्ध-कीकस-पक्ष-आत्मा-ऊरु-पुच्छसम्बन्धि दशानुगानं, गन्धर्वाप्सरसां आनन्दप्रतिनन्दौ, वाक्श्रोत्रचक्षुश्शिर-आत्मार्थं सामानि, ऋतूणां तथा पितृणां सम्बन्धि बहुसामानि उक्तानि। तथैव दशरात्र-संवत्सर- एकाह- अहीन- सत्र- प्रायश्चित्त-क्षुद्रादिपर्वेषु श्रौतयागादिषु विनियोज्यमानसाम्नां संग्रहः विद्यते।

मानवानां जन्मनः आरभ्य मृत्युपर्यन्तं षोडशकर्मणां प्रयोगः सामवेदिनामपि विद्यते। तत्र पूर्वापररूपेण संस्काराणां मुख्यत्वं प्रतिपादितम्। गर्भाधान - पुंसवन - सीमन्त - जातकर्म - नामकरण-निष्क्रमण - अन्नप्राशन, चौल-कर्णवेध-उपनयन-वेदारम्भ-वेदोत्सर्जन-समावर्तन-विवाह-पितृमेधाः संस्काराः भवन्ति। एभिः संस्कारैः संस्कृतो मनुष्यः शुद्धः पूतो भूत्वा ब्रह्मलोकपर्यन्तं गन्तुं समर्थो भवति।

श्रौतकर्माणि नाम श्रुत्युक्तकर्माण्येव। श्रौतकर्मनाम्ना लोकानामुपकाराय यागादयोऽनुष्ठीयन्ते। तानि च श्रौतकर्माणि हविर्यज्ञात्मकानि अग्निहोत्रादीनि, सोमयज्ञात्मकानि अग्निष्टोमादीनि च। यागद्वारा देवेभ्यः हविः प्रदीयते। फलरूपेण वृष्टिः पतति, धान्यादीनां सम्यगुत्पत्या प्रजाः परिपालिताः भवन्ति। अतः यागादीनां बहुविधफलत्वं दृश्यते। यथा- पुत्रकामनार्थं पुत्रेष्टिः, पर्जन्यार्थं पर्जन्येष्टिः इत्यादयः। यागमाध्यमेन समाजे वस्तु-धनादीनां विनिमयरूपव्यापारः वर्धते, न्यायव्यवस्था समृद्धा भवति, परस्परमेलनेन धनधान्यादीनामादानप्रदानमपि भवति।

“मन्त्रब्राह्मणयोर्वेदनामधेयम्” इति वचनात् ब्राह्मणग्रन्थाः अपि वेदराशौ एको भागः। सामवेदे 11 ब्राह्मणग्रन्थाः उपलभ्यन्ते। अत्र सृष्ट्युत्पत्तेः कारणं, तत्रोत्पन्नानां जन्तूनां योगक्षेमः, पापप्रायश्चित्तं, दीर्घायुरारोग्यप्राप्तिः, रोगादीनां शमनं, शत्रुवशीकरणं, सुखसौभाग्यप्राप्तिः, यशःप्राप्तिः. श्रीसाधनम्, अलक्ष्म्याः परिहारः, हिरण्य-गो-धनप्राप्तिः, जयपराजयपरिज्ञानोपायः, देशक्षोभ-निवारणार्थं अद्भुतशान्तिः, पूर्वजन्मज्ञानं, स्वच्छन्देन अन्तरिक्षक्रमणं , स्वर्गप्राप्तिः, मोक्षसाधनानि इत्यादयो विषयाः उक्ताः। ऋष्यादीनां वंशावलीवर्णनपूर्वकं अस्माकं पूर्वजानां वर्णनम्, यज्ञयागादिषु साम्नामुपयोगः इत्येवं बहवो विषयाः विस्तरेण वर्णिताः।

लाक्षणिकग्रन्थाः मन्त्राणां साम्नां च वेदोच्चारणोनूच्चारणयोः विधानप्रदर्शनम्, लोपालोपः, वृद्धावृद्धः, प्रकृतिविकृतिः, गतागतः,



उच्चनीचभावाः वर्णिताः। तथैव व्याकरणदृष्ट्या शब्दानां निरुपणं शुद्धाशुद्धपरिज्ञानमपि प्रदर्शितम्। अनेन मन्त्राणां नित्यत्वसंरक्षणे लक्षणग्रन्थानां महत्वं योगदानं च वरीवर्ति।

एवमेव शिक्षाग्रन्थेषु गुरुशिष्ययोः सम्बन्धः, गुणधर्मः, दिनचर्या, वेदोच्चारणप्रकारः, मन्त्राणां शुद्धाशुद्धता, तथैव स्वराणां विवेकः, शुद्धप्रयोगः, स्थानानि, व्यवस्था, परिचयः, दोषाः उक्ताः। स्वराणां वर्ण-लक्षण-रागाः प्रतिपादिताः। सामस्वराणां वंश, वेणु, वीणादिषु वादनप्रकारः, अध्ययने अङ्गुल्यादीनां प्रयोगः, फलाफलं, वर्णानामुच्चारणे मुखजिह्वादन्तोष्ठ्यादीनां स्थानानामुपयोगः, दीप्तादिश्रुतीनां विशेषाः, जात्यः, क्षैप्रः, अभिनिहितः, तैरोव्यञ्जनः, तिरोविरामः, प्रश्लिष्टादीनां च लक्षणम्, ह्रस्व-दीर्घ-कम्प-उदात्त-अनुदात्त- स्वरितादीनां विचारः, संहितापदस्वरस्थितिविचारः, मात्रावग्रहः तस्याभावः, विवृत्तिः, वर्णानां विकारः, छन्दोविचारः, लघुगुरुपरिचयः,स्थलम् विवृतम्। अध्ययनकर्तुः स्वास्थरक्षणायोपायाः, उत्थाने नियमः, दन्तधावनकाष्ठानां प्रयोगे नियमः फलं च, कर्तव्यकर्माणि, मन्द्रादिस्वरप्रयोगनियमः, उत्तमाधमशिष्ययोः लक्षणं, विद्याभ्यासस्य विधानं, फलं, विद्यार्थिनां चिरनिद्राया अनौचित्यम्, भोजनादौ नियमाः, विद्यायाः अधिगमे अर्हतायाः सम्पादकाः गुणाः,विघ्नकरा दुर्गुणाः, शुश्रुषाया माहात्म्यम्, विद्याप्राप्तये उपायाः, विद्याविघ्नकराः पदार्थादयो विषयाः विस्तृतेण वर्णिताः।

**अस्योपयोगः कथं करणीयः-**

वेदमन्त्राणां पारम्परिकरीत्याध्ययनाध्यापनम्, तत्रोक्त-प्रायोगिकभागानां ज्येष्ठानां पर्यवेक्षणेन प्रयोगः, मन्त्राणां अर्थसहिताध्ययनम्, इत्यादि करणीयं भवति। यद्यपि सम्पूर्णवेदः विज्ञानमयः, तथापि आधुनिकपरभाषया तत्र तत्र अंशान् स्वीकृत्य तस्मिन्निहित लोकोपकारकभागान् वैज्ञानिकरीत्या विश्लेषणम्, प्रकाशनञ्च कुर्यात्। मन्त्राणां अर्थसहितज्ञानं तथा तस्य व्याख्यानस्य गूढार्थं ज्ञात्वा जीवने

उपयुज्यते चेत् जन्मनः लोकस्य च सार्थक्यं भवति । "जन्तूनां नरजन्मदुर्लभम्" इति उक्तेः आन्तर्यस्तावत् उत्कृष्टस्य मानवजन्मनः जीवनसाफल्यं केवलं वेदोक्तज्ञानस्याधारेण भवति इति। "ज्ञानमयं जगत्" अतः ज्ञानस्य मूलस्रोतः वेदः। तस्य परिज्ञानं, तस्य प्रयोगः नितान्तं आवश्यकम्।

आधुनिककाले यज्ञयागादयः याथार्थ्येन नानुष्ठीयन्ते। अतः तेषां फलमपि सम्यक् न लभ्यते। यथोक्तं तथैव कर्तुं समाजे वैदिकानां जागरूकता करणीया। कस्यचित् वस्तुनः कालानुगुण्येन प्रयोगः श्रेष्ठत्वमावहति। यद्यपि वेदोक्तप्रयोगान् कर्तुं समयानुकुल्यं नास्ति तथापि तान् शास्त्राविरुद्धतयाचरणं कर्तुं शक्यते। अनेन उत्तमफलमपि प्राप्यते। शरीरस्यारोग्यार्थं वेदोक्त दिनचर्याहारविहारमस्माभिः पालनीया। पुत्रसन्तत्यर्थं वेदोक्तोपायाः कर्तव्या अनुष्ठातव्याः च। अलक्ष्मीनिवारणपूर्वकं लक्ष्म्याः कृपासिद्ध्यर्थं बहूपायाः निर्दिष्टाः। श्रवणदर्शनार्थं यद्यपि आधुनिकरीत्या दृष्टिं दातुं न शक्यते तथापि अन्तश्चक्षुबलेन सर्वं ज्ञातुमर्हति। स्ववंशपरम्परारक्षणार्थं विवाहः अनिवार्यः। तत्र विवाहप्रतिबन्धदोषनिवारणार्थं उपायाः कल्पिताः। समाजे व्यवहारे च शत्रुता भवत्येव। शत्रुनिवारणार्थं आभिचारिकादि प्रयोगः अनुष्ठीयते।

सुवर्णस्य संस्कारं कृत्वा यथा आभूषण कूर्मः, यथा च औषधसेवनेन वयं लाभान्विताः भवेम, तथैव वेदप्रतिपादितविद्यां आधुनिककालानुगुण्येन संस्कृत्य प्रयोगेन प्राचीनविद्यायाः नूतनरूपेण फलभाजः भवामः। कर्म विना यथा फलं नास्ति तथैव ज्ञानं तु अस्ति तस्मात् फलं प्राप्तुं तस्य क्रियारूप प्रयोगः अवश्यं करणीयः।

अलसो विद्याधनादिकं न प्राप्नोति । क्लीबो नपुंसकः पुत्रादिं न लभते। मानी च अननुवर्तनशीलः न विद्याभाजनं भवति नायं विद्यां च लभते। लोकरवाद्भीतो न विद्यां गृह्णति। अद्य श्वः परश्वः इति कालप्रतीक्षको न विद्यामाप्नोति। यथा भूतलादुदकं महता यत्नेन



लभ्यते एवं पौनःपुन्येन गुरुसेवया गुरुगतां विद्यां एव अधिगच्छति। अतः वयं सर्वे स्वजीवने क्षणकालमपि आलस्यं विना परिश्रम्य विद्यार्जनं कुर्मः चेत् तद्विद्या फलवती भवति। अस्माकं अज्ञानमपि दूरीभवति। सद्विद्या प्राप्तं चेत् उच्यते खलु -

"विद्या ददाति विनयं विनयात् याति पात्रताम् ।
पात्रत्वात् धनमाप्नोति धनात् धर्मं ततः सुखमिति"।

वेदे वर्णित सर्वापि विद्या जीवने सुखशान्तिप्राप्त्यर्थमेव। अतः सद्विद्या अवश्यं अध्येतव्या।

वैदिकवाङ्मयस्य उपयोगं नानाप्रकारेण कर्तुं शक्यते। यथा समस्तवैदिकवाङ्मयस्य सर्वासु भाषासु अनुवादः। वेदस्थविषयाणां साहित्यिकरूपेण देशे सर्वत्र शैक्षिणिकसंस्थासु अध्ययनम्। वैदिकवाङ्मयसंबद्धग्रन्थेषु अप्रकाशितग्रन्थानां अनुपलब्धग्रन्थानां प्रकाशित- उपलब्धिग्रन्थानाञ्च दृश्यश्रव्यलेखनमाध्यमेन ध्वनिमुद्रिकासु संस्थापनं, अन्तर्जाले च निधापनं इत्यादिरुपेण संरक्षणं कर्तव्यं भवति।

इदानीन्तनसमाजस्य उपयोगाय वेदसंबद्धानि नानाकार्याणि कर्तुं शक्नुमः। यथा च प्रयोगशालामाध्यमेन वेदमन्त्राणां फलविषये शोधकरणं, वेदमन्त्रोच्चारणकाले स्वरभेदेन शरीरगतनाना अङ्गानां विविधफलप्राप्तिविषये शोधाध्ययनं, वेदोक्तविषयाणां प्रायोगिक-परीक्षा, वैदिकविदुषां नानालौकिकशास्त्राणां वेदानां च परस्परं संबन्धकरणेन समाजोपयोगाय नूतनप्रयोगाविष्करणं इत्येवं रूपेण वेदसंरक्षणकारीणि समाजहितकारीणि च बहूनि कार्याणि कर्तव्यानि भवन्ति।

समाजात् वैदिकविद्वांसः राजकीयादिनानाविधकारणेन दूरङ्गताः सन्ति। समाजोऽपि स्वश्रेयोभिवृद्धये वैदिकविदुषां अनुसरणं, मार्गदर्शनं, तेषा रक्षणार्थं प्रयत्नः कुर्यात्। वैदिकविद्वांसोपि सर्वदा सर्वथा च समाजहिताय जीवेयुः इति आशास्य विरमामि।

सन्दर्भग्रन्थाः-

1. सामवेदसंहिता - सम्पादकः,पण्डित श्रीपाद दामोदर सातवलेकर, पारडी, गुजरात्, 1956
2. सामविधानब्राह्मणम् - सम्पादकः. प्रो. बि.आर् शर्मा, राष्ट्रियसंस्कृतविद्यापीठ, तिरुपति, 2004
3. जैमिनीयसामगानम् - सम्पादकः श्रीविभूतिभूषणभट्टाचार्यः, सम्पूर्णानन्द संस्कृत विश्वविद्यालयः. वाराणसी, 2001
4. राणायनीयगानसंहिता - राणायनीयसंशोधनाप्रतिष्ठानम्, तिरुपति, 2012
5. सामवेदसस्वरभाषाभाष्यम्- सम्पादकः वेदाचार्यः विष्णुदेव साङ्कलेकरः, अमृतं ट्रस्ट, अहमदाबाद, 1978
6. वैदिकसम्पत्तिः - लेखक. रघुनन्दन शर्मा, स्वाध्यायमंडल, बरोडा, 1931
7. जैमिनीयब्राह्मणम्-सम्पादकः डा. रघुवीर, द इन्टरन्याशनल् एकादमी अफ इण्डियन्कल्चर, नागपुर, 1950
8. श्रौतकोशः - वैदिकसंशोधना मण्डलम्, पुणा, 1970
9. ऋक्तन्त्रम् - डा. सूर्यकान्तः, मेहरचन्द लक्ष्मणदास, दिल्ली-1970
10. त्रयीपरिचयः - सत्यव्रत सामश्रमी, कोलकत्ता, 1893
11. नारदीयशिक्षा - डा गिरिजाप्रसाद षडङ्गी, राणायनीयसंशोधनाप्रतिष्ठानम्, तिरुपति, 2014
12. ताण्ड्यब्राह्मणम् - चौखम्बासंस्कृतप्रतिष्ठान, दिल्ली, 1989

****



# 5.सहस्रवर्त्मा सामवेदः – एकमनुशीलनम्

डा टि. उमेशः
सहाचार्यः, मीमांसाविभागः
वेदाङ्ग-शास्त्रविभागाध्यक्षः
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपतिः

वागीशाद्यास्सुमनसस्सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम्।।

सुविदितमेव यत् वेद एव विश्वस्य सर्वप्राचीनतमो ज्ञाननिधिः। श्रुतिपरम्परया प्राप्तः अपौरुषेयात्मकः वेद एव परमपुरुषार्थसाधनम्। श्रुत्याद्यपरपर्यायात्मकवेदमाधारीकृत्यैव सर्वोऽपि प्रपञ्चः प्रपञ्चितः। उक्तञ्च यत् –

सर्वेषां स तु नामानि कर्माणि च पृथक्पृथक्।
वेद शब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे।। इति (म.स्मृ -1-21)

वेदेष्वेव निहितम् ईश्वरीयं परिपूर्णं ज्ञानम्। वेद एव मूलं धर्मस्येति निश्चप्रचम्। अतोऽच्यते **सर्वज्ञानमयो हि सः, वेदोऽखिलो धर्ममूलम्** इति। यावद्धि कर्मजातं तत्सर्वं वेदोपज्ञमेव। दर्शनादीन्यपि वेदानुप्रणीतान्येव। तदुक्तं भर्तृहरिणा –

तस्यार्थवादरूपाणि निश्रिताः स्वविकल्पजाः।
एकत्विनां द्वैतिनाञ्च प्रवादा बहुधा मताः।। इति
(वाक्यपदीयम् – ब्रह्मखण्डः – कारिका संख्या - 8)

ज्ञानलाभसत्ताविचारार्थक विद् धातुना निष्पन्नोऽयं वेदशब्दः ज्ञानपरः। विद्यते ज्ञायते अनेनेति वेदः इत्यपि वेदस्य परिभाषा। सायणाचार्यः अपि तैत्तिरीयसंहितायाः भाष्यस्य भूमिकायां एवं प्रकारेण व्यनक्ति – **इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः** इति । वेदः परमात्मनः निश्वासरूपः, नित्यः, शाश्वतश्च। उक्तञ्च बृहदारण्यके – **तस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरसः** इति।

**अनन्ता वै वेदाः** इति वेदानाम् अनन्तत्वं साक्षात् श्रुत्या एव प्रतिपादितम्। तत्र विशिष्य **ऋक्सामयजुर्मन्त्राणां** स्वरूपं भगवता जैमिनिना प्रदर्शितं पूर्वमीमांसाशास्त्रे।

पदार्थानुसारं छन्दोबद्धः मन्त्रः ऋक् शब्देन कथ्यते, गीतिरूपो मन्त्रः सामशब्देन कथ्यते, छन्दोगीतिवर्जितप्रश्लिष्टमन्त्रश्च यजुश्शब्देन कथ्यते।

तथा च मन्त्रत्रैविध्यलक्षणं सूत्रत्रयेण सूत्रितं भगवता जैमिनिना। यथा – तेषामृग्यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुश्शब्दः। इति (जै.सू – 2-1-35,36,37)

**सामशब्दार्थः -**

साम - सान्त्वेन इति धातुना निष्पन्नोऽयं सामशब्दः। सा इति ऋक्सूचकतया अम इति गानम् इत्यर्थो ज्ञेयः। तत्र स्वरादिव्यञ्जकतया च व्याख्यां केचिद्वदन्ति। तद्यथा - जैमिनीयसूत्रानुसारं सामशब्दस्य गीतिरेवार्थः। छान्दोग्योपनिषदि स्वरार्थकोऽयं सामशब्दः। बृहदारण्यकोपनिषदि गानमेव सामशब्दस्य वाच्यार्थः।

**सामवेदस्य वैशिष्ट्यम् -**

तत्र गीतिरूपस्य सामस्य वैशिष्ट्यं वैदिकप्रपञ्चे सर्वदा विद्यते। सामवेदीयसंहितादिग्रन्थेषु प्रतिपादानि नैकानि सार्वकालिकानि ऐहिकामुष्मिकफलप्रदायकानि तत्वानि सर्वथा मानवमात्रकल्याणायोपयुक्तानीत्यत्र नास्ति लेशोऽपि सन्देहः।

सामवेदस्य श्रवणमनोहरगीतिविशिष्टलक्षणात्मकत्वादेव **वेदानां सामवेदोऽस्मि** (भ.गी – 10-22) इति गीतायामुक्तं भगवता श्रीकृष्णेन। तथा याज्ञिकप्रक्रियायां तु सामवेदस्य महती आवश्यकता विद्यत एव। तच्च ज्ञायते **"नासामा यज्ञोऽस्ति"** (श.प.ब्रा. 1.4.1.1) इत्यादिना। एवञ्च सर्वेषां वेदानां सारोऽयं सामवेद इति सामवेदप्राशस्त्यविषये "सर्वेषां वा एष वेदानां रसो यत् साम" (श.प.ब्रा. 12.8.3.23) इति यदुद्धृतं शतपथब्राह्मणवाक्यमेव प्रमाणम्।



अन्ततो सामवेदाध्यायिनः सकलवेदतत्वज्ञाः इति इत्थं प्रशंस्यन्ते “सामानि यो वेत्ति स वेद तत्त्वम्” इति। (बृहद् देवता)

**सामशाखाविचारः -**

महाभाष्यकारेण पतञ्जलिमुनिना पस्पशाह्निके वेदशखानां विषये – "एकविंशतिधा बाह्वृचम्, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, नवधाधर्वणो विदुः" इति निरूपितम्। तत्र सामवेदस्य सहस्रं शाखाः आसन् इत्यतः "सहस्रवर्त्मा सामवेदः" इत्यभिधानप्रसिद्धिः। तासु सहस्रशाखासु त्रयोदशशाखानां नामोल्लेखः तत्र दृश्यते। यथा - (1.) **राणायनि** (2.) **शाट्यमुग्र्य (सात्यमुग्रि)** (3.) **व्यास** (4.) **भागुरि** (5.) **औलुण्डी** (6.) **गौल्गुलवि** (7.) **भानुमान् औपमन्यव** (8.) **काराटि (दाराल)** (9.) **मशक गार्ग्य (गार्ग्य सावर्णि)** (10.) **वार्षगव्य (वार्षगण्य)** (11.) **कुथुम (कुथुमि, कौथुमि)** (12.) **शालिहोत्र** (13.) **जैमिनि।**

तत्र सायणाचार्यस्तु सामविधानब्राह्मणव्याख्यानावसरे **"ततस्स्मृतिकाराः सहस्रवर्त्मा सामवेदः इति निर्धारितवन्तः - सहस्रं शाखा ह्यर्थतो वेदशब्दः। अन्यच्च - एष सहस्रवर्त्मा - नानावर्ति विभूषिताः। संयोगशृङ्खलानां सामवेदनिबन्धनात्। परं कालकलितत्वात् सम्प्रति न प्राप्यन्ते विभक्तानां सामशाखानां नामानि महर्षि प्रोक्तानि सर्वाणि। तासु बह्व्यः शाखाः विलुप्ताः। केवलं – कौथुमि- राणायनि-जैमिनिरिति तिसृणामेव शाखानां वर्तमानसमये अध्ययनाध्यापनपरम्परायां द्रष्टुं शक्यते"** (3-9-8) इति निरूपयति। तथा च तत्र सहस्रभेदमध्ये बह्व्यः शाखाः शक्रेण वज्रेण प्रणष्टाः इति चरणव्यूहाख्ये ग्रन्थे स्पष्टं निर्दिष्टम् – **"सामवेदस्य किल सहस्रभेदाः आसन्नध्यायेष्वधीयानास्ते शतक्रतुवज्रेणाभिहताः प्रणष्टाः"** इति। तथा च तत्रैव राणायनीयानां नवभेदाः – **राणायनीयाः, शाट्यायनीयाः, सात्यमुद्गलाः, खल्वलाः, महाखल्वलाः, लाङ्गलाः, कौथुमा, गौतमा, जैमिनीयाश्चेति** संज्ञाभेदेन निर्दिष्टाः। तत्र सम्प्रति उपलभ्यामानासु

कौथुमीय-राणायनीय-जैमिनीयशाखासु मन्त्राक्षरदृष्ट्या न भेदः किन्तु स्वरोच्चारणभेदेनैव भेदो द्रष्टव्यः।

**सामवेदीयब्राह्मणग्रन्थाः**

समग्रोऽपि वेदः मन्त्रब्राह्मणरूपेण द्विधा विभक्तः। तत्र संहिता भागस्य मन्त्रभाग इति संज्ञा। मन्त्रातिरिक्तवेदभागः ब्राह्मणमिति मन्त्रब्राह्मणयोर्लक्षणं प्रदर्शितं भगवता जैमिनिना **तच्चोदकोषु मन्त्राख्या, शेषे ब्राह्मणशब्दः (जै.सू.2-1-32&33)** इति। तथा च उक्तम्

मन्त्रश्च ब्राह्मणञ्चेति द्वौ भागौ तेन मन्त्रतः।
अन्यत् ब्राह्मणमित्येतत् भवेत् ब्राह्मणलक्षणम्।। इति (जै.न्या. 2-1-8)

तत्र वेदिकमन्त्राणां व्याख्यानरूपाः मन्त्राः ब्राह्मणग्रन्थाः तत्र तत्र वेदशाखानुसारं नैके उपलभ्यन्ते। यथा- ऋग्वेदस्य ऐतरेयब्राह्मणम्, शांखायनब्राह्मणम् (कौषीतकीब्राह्मणम्), शुक्लयजुर्वेदस्य शतपथ-ब्राह्मणम्, कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणम्, मैत्रायणीब्राह्मणम्, कठब्राह्मणम्, कपिष्टलब्राह्मणम्, अथर्ववेदस्य गोपथब्राह्मणम्। सामवेदे विशेषेण अष्टब्राह्मणाः सामवेददीपस्थानवत् विराजन्ते।

तानि ब्राह्मणानि - ताण्ड्यमहाब्राह्मणम्, षड्विंशब्राह्मणं, सामविधानब्राह्मणं, आर्षेयब्राह्मणं, देवताध्यायब्राह्मणं, छान्दोग्यब्राह्मणं, सँहितोपनिषद्ब्राह्मणं, वंशब्राह्मणम् इति। उक्तञ्च कारिकायाम्-

अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिदम्।
षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत्।।
आर्षेयं देवताध्यायो भवेदुपनिषत्ततः।
संहितोपनिषद्वंशो ग्रन्थाः अष्टवितीरिताः। इति।

**सामवेदीयोपनिषदः**

पर्यायचतुष्टये विभजितस्य वेदस्य अन्तिमपर्याया उपनिषत्। इयं परा विद्येति प्रोक्ता। वेदो ज्ञानशब्देनोच्यते चेत् उपनिषत् ज्ञानस्य परा काष्ठा। पुरुषार्थचतुष्टयेषु मोक्षाख्यान्तिमपुरुषार्थप्रदायकाः प्रतिवेदसम्बद्धाः अनेकाः उपनिषदः विद्यन्ते। तत्र प्रसिद्धासु



दशोपनिषत्सु छान्दोग्य-केनाख्योपनिषदौ सामवेदसम्बद्धौ। तत्रापि छान्दोग्योपषनिषत् मुख्यतमा गद्यमयी तत्त्वमसीति महावाक्यस्य जननीस्वरुपा आख्यानोपाख्यानैः समलङ्कृता तत्वद्रष्टॄणां चिन्तकानां जिज्ञासूनाञ्च परमोपकारका वर्तते। तत्र उद्गीथोपासनया प्रारब्धेयमुपनिषत् बहुविधसोपानमतिक्रम्य कार्यब्रह्मलोकं प्रापयति जिज्ञासून् साधकांश्च। अस्यामुपनिषदि बहूनाम् ऋषीणां चिन्तनं विषयोपस्थापनशैली च यथा मनोहारिणी तथैव विज्ञानसम्मता। तत्र चिन्तकेषु शिलकः, दाल्भ्यः, प्रवाहणः, उषस्तिः, शाण्डिल्यः, गौतमः, सत्यकामो जाबालः, सत्ययज्ञः पौलुषिः, जनः शार्कराक्ष्यः, रैक्वः, अश्वपतिः, उद्दालक आरुणिः, श्वेतकेतुः, नारदः, सनत्कुमारश्च प्रमुखाः।

वेदोपनिषत्सु ऐहिकामुष्मिकफलोपभोगाय तथा राष्ट्रहिताय च उपदेशात्मकानि उद्धरणानि उपलभ्यन्ते। तत्र स्थालीपुलाकन्यायेन छान्दोग्योपनिषदि प्रयुक्तम् एकं राष्ट्रियहितचिन्तनविचारम् इदानीं प्रदर्श्यते। तत्र विशिष्य राष्ट्रियहितचिन्तनविचारः तृतीयाध्यायस्य षष्ठखण्डादारभ्य दशमखण्डपर्यन्तं प्रस्तुतः। (छा.उ.3/6-10) तत्र क्रमशः वसूनाम्, रुद्राणाम्, आदित्यानाम्, मरुताम्, साध्यानाञ्च आधिपत्यं स्वराज्यञ्च वर्णितम्।

तथा च पञ्चदेवोपासनया संरक्षितं राष्ट्रं कीदृशं स्यात् इत्येतस्मिन् विषये प्रतिपादितं छान्दोग्ये यत् – न मे स्तेनो जनपदे न कदर्यो न मद्यपो न। ना नाऽहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः।। इति (छा.उ.5-11-5) अस्यायमर्थः-

**न स्तेनः** - अस्माकं राष्ट्रे स्तेनो न स्यात्। सोऽयं स्तेनो द्विविधः। प्रकटो गुप्तश्च। **न कदर्यः** – न कदाचारकर्मव्यापारसंलग्नः स्यात्। **न मद्यपः** – न मादकद्रव्यसेवकः स्यात्। **नानाहिताग्निः** – आहिताग्निरेव स्यात्। **न अविद्वान्** - विद्वद्ज्ञानसम्पन्न एव स्यात्। **न स्वैरि**- स्वेच्छाहाराचरविहारि न स्यात्। **न स्वैरिणी** –स्वेच्छाहाराचारविहार-शीला स्त्री न स्यात्। कथनस्य तात्पर्यमिदमस्ति यदस्माकं राष्ट्रे ये

नागरिकाः सन्ति ते सर्वे धार्मिकाः, पारम्परिकजीवनयापनकर्तारः, नित्यसदनुष्ठानुष्ठानव्रतपरायणाः, शास्त्रोक्तविधानमनुपालकाः, नीतिनिपुणाः, सभ्याः, सदाचारिणः, सर्वविधकार्यकुशलाः, स्वस्थमनस्काः एव सन्तु। न तु भ्रष्टाः, दुश्शीलाः, दुराचारिणः, चोराः, स्वैरिणो वा भवन्तु। स्त्रियः अपि सुशीलाः, सदाचरणयुक्ताः, नम्राः, स्वकर्तव्यपरायणाः, शास्त्रविधिपरिपालिकाश्च भवन्तु, न स्वैरिण्यो दुष्टाः स्त्रियोऽत्र संभवन्त्विति सुराष्ट्रकल्पनाविषयकानि उपदेशात्मकानि नैकानि तत्वानि छान्दोग्योपनिषदि प्रतिपादितानि। यस्यानुपालनेन धर्मसाम्राज्यस्य भव्यभारतस्य औन्नत्यं द्रष्टुं शक्यते।

*****



## 6.सामवेदीयब्राह्मणग्रन्थानां परिचयः

**विद्वान् सुन्दरराम श्रौती**
सलक्षण,श्रौतस्मार्तशिरोमणि
वेदपारायणदार्, विजयवाडा

**नीलोत्पलदलाभासं सामवेदं हयाननम्।**
**अक्षमालान्वितं दक्षे वामे कम्बुधरं भजे।।**
वेदाः वयं वः शरणं प्रपन्नाः वेदोऽखिलो धर्ममूलम्।
वेदो नित्यमधीयताम्। धर्मो रक्षति रक्षितः।

भो भो वेदविदः विदितमेवेदं भवताम् "अनन्ता वै वेदाः" इति काठकीया श्रुतिः श्रुतिस्तावत् निरवधिका। ईदृशीश्रुतिः समग्रतया, न केवलं एकेन पुंसा अध्येतुं पार्यते। अथवा नराणां अल्पायुष्ट्वम्, अल्पमेधस्त्वं च आलोक्य भगवान् व्यासः परमकरुणया ऋग्वेदेन होता, यजुर्वेदेनाध्वर्युः, सामवेदेन उद्गाता इति श्रौतपरिभाषोक्तप्रकारेण श्रुत्युक्तज्ञानानुष्ठानोपयोगितया वेदान् चतुर्था व्यभजत् एवं चतुर्धाविभक्तेषु वेदेषु यज्ञकर्मणि शान्तिपौष्ठिककलापे अथर्ववेदस्य च विनियोगः प्रदर्शितः। एकैकोऽपि वेदः मन्त्रभागः ब्राह्मणभागः उपनिषद्भागः इति तच्छाखानुरोधेन त्रेधा भिद्यते। एवं सामवेदे पूर्वार्चिकम् उत्तरार्चिकम्, अनयोः पदपाठः स्तोभपदपाठः च।

गानं च द्विविधम्, प्रकृतिः ऊहः। प्रकृतिश्च द्विविधा ग्रामे गेयं अरण्ये गेयमिति । ग्रामे गेयस्य ऊहः ऊहगानम्, अरण्ये गेयस्य ऊहः रहस्यगानमिति संज्ञा। विभागान्तरमपि प्रकृतिश्च सप्तगानात्मिका, विकृतिः ऊहः सप्त तन्त्रात्मकः इति। गायत्रं प्रथमं गानमाग्नेयं तु द्वितीयकम्। तृतीयमैन्द्रं गानं स्यात् पावमानं चतुर्थकम्। अर्कद्वन्द्वव्रतं चेति त्रीणिपर्वाणि पञ्चमम्। षष्ठं च शुक्रियं गानं महानाम्नी च सप्तमम्। एतानि सप्तगानानि प्रकृतेः कथितानि वै इति सामवेदमन्त्रभागः।।

ब्राह्मणभागः अष्टधा विभक्तः-

**अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम्**
**षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत्।**
**आर्षेयं देवताध्यायो भवेदुपनिषत्ततः।**
**संहितोपनिषद्वंशो ग्रन्था अष्टावितीरिताः।**

अत्र ब्राह्मणभागमधिकृत्येदानीं विचारयामः। अष्टविधं ब्राह्मणमिति पूर्वमुक्तं, तत्रादिमं ब्राह्मणमिति प्रथितस्य तण्डिना महर्षिणा दृष्टत्वात् ताण्ड्यमिति, ब्राह्मणान्तरापेक्षया महत्वात् पञ्चविंशत्यध्यायात्मकत्वात् महदिति, प्रौढमिति पञ्चविंशमिति च नामास्य सम्पन्नम्। अत्र ब्राह्मणे बहवो भागाः विहिताः। यागाश्च दर्वीहोमेष्टिपशुसोमभेदेन विभक्ताः। तत्र प्रतिदिनं सायंप्रातः पय आदि द्रव्यैः क्रियमाणो होमः अग्निहोत्राख्यः, एतादृशश्च अन्यो होमः दर्वीर्वीहोमसंज्ञकः। पर्वप्रतिपर्वसमारभ्य प्रतिमासं कालद्वये क्रियमाणा यागविशेषा इष्टिपदवाच्याः। ता इष्टयः पुरोडाशेन चरुणा दध्ना अन्यैर्द्रव्यविशेषैः निर्वर्त्यन्ते। प्रतिवर्षर्तु, कालान्तरे वा, पशोः हृदयादिभिः अङ्गैर्निर्वर्त्यमानो यागः पशुशब्दवाच्यः। प्रतिवर्षं वसन्ते अन्यस्मिन् वा काले सोमाख्यां लतां क्रीत्वाऽभिषुत्य तद्रसं ग्रहचमसादि विहितपात्रेषु यपाविधिपूरयित्वा तत् तत् देवताभ्यः विधिना प्रदीयते यत्र स सोमयागः। (प्रकृतिविकृतिभावः)

यस्य कर्मणस्सन्निधौ तदपश्रिताङ्गकलापाः सकलाः विधीयन्ते सा प्रकृतिः, यस्य समीपे वैशेषिकाण्येवाङ्गानि विधीयन्ते सामान्यङ्गानि तु सादृश्यादिना अतिदिश्यन्ते सा विकृतिः। तत्र दर्वीहोमानां प्रकृतिः, अग्निहोत्रहोमाः, इष्टीनां प्रकृतिः, दर्शपूर्णमासेष्टिः पशूनां प्रकृतिः, अग्निषोमीयपशुः, सोमानां प्रकृतिः अग्निष्टोमः, इष्टीनाम् इष्ट्यन्तराङ्गत्वं सोमाङ्गत्वं च सम्भवति। पशूनां सोमाङ्गत्वमेव। न पश्वन्तराङ्गत्वं नेष्ट्यङ्गत्वं वा।



सोमा अपि सोमान्तराङ्गानि भवन्ति न पश्वङ्गानि नापीष्ट्यङ्गानि। अग्निहोत्रहोमः यजुर्वेदविहितवत् सवैरनुष्ठीयते। दर्शपूर्णमासादीष्टयः पशुयागश्च ऋग्वेदयजुर्वेदाभ्यां विधीयन्ते। सोमयागस्तु वेदत्रयेण विधीयते इति सोम एव वेदत्रयविदां षोडशार्त्विजाम् उपयोगः। ऋग्वेदीयाः होता, मैत्रावरुणः, अच्छावाकः, ग्रावस्तुत इति होतृगणः। यजुर्वेदीयाः अध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता इति अध्वर्युगणः। सामवेदीयाः उद्गाता, प्रस्तोता प्रतिहोर्ता सुब्रह्मण्यः इति उद्गातृगणः। ब्रह्मा ब्राह्मणाच्छंसी, आग्नीध्रः पोता इति ब्रह्मगणः।

ऋग्वेदविहितकर्मानुष्ठातारः होतारः होतृगणः, यजुर्वेदविहित-कर्मानुष्ठातारः अध्वर्यवः अध्वर्युगणः, सामवेदविहितकर्मानुष्ठातारः उद्गातारः उद्गातृगण इति कथ्यन्ते। यागस्याङ्गकलापानां बहुत्वात् नूनातिरेकदोषा भवेयुः, तन्निरीक्षणार्थम् वेदत्रयवित् ऋत्विक् ब्रह्मा एकी भवति। ब्रह्मगण इति उच्यते। तत्र पशुपर्यन्तेषु यागेषु साम्नां विनियोगः नास्ति। आधानं विना सोमे एवं वेदत्रयोपयोगः। तादृश सोमयागाः अग्निष्टोमप्रभृति विश्वसृजामयनपर्यन्तम् अष्टसप्तत्यधिकसंख्याका अत्र ताण्ड्यब्राह्मणे विहिताः। एतदनुसृत्यैव आपस्तम्बकात्यायनप्रभृति श्रौतसूत्रकाराः क्रतून् विहितवन्तः तथा च आपस्तम्बश्रौतसूत्रे इति छन्दोगब्राह्मणम् इति ताण्ड्यकम्, इति ब्राह्मणं, इति प्रमाण उदाह्रियते।

अत्र ताण्ड्यब्राह्मणप्रथमाध्याये उद्गातुः आर्त्विज्याङ्गीकार-मन्त्राः, देवयजनम्, हविर्धानप्रवेशः, द्रोणकलशावस्थापनमन्त्राः प्रवृतहोम-उपवेशनादिमन्त्राः, धिष्ण्योपस्थापनमन्त्राः, द्वितीयतृतीया-ध्याययोः स्तोमप्रकाराः निरुप्यन्ते। स्तोमो नाम उद्गातृभिः, स च त्रिवृत्, पञ्चदश, सप्तदश, एकविंश-त्रिणव, त्रयस्त्रिंश, चतुर्विंश, चतुश्चत्वारिंश-अष्टचत्वारिंशभेदेन नवप्रकारः। तत्र एकैकस्मिन् स्तोमे पर्यायत्रयं विद्यते। एकैकस्मिन् पर्याये विष्ठुति त्रयं विद्यते। सा च बहुप्रकाराः। पर्यायस्तोत्राणाम् इयत्तागणनार्थं काष्ठविशेषो वर्तते। तस्य

कुश इतिनाम, कुशा प्रादेशमात्रा कुशवत् उन्नतपृष्ठाः, तत्क्षणे संस्कृताः, तीक्ष्णाग्राः, औदुम्बरवृत्ताश्च स्यात् । सा च स्तोत्रे प्रारभ्यमाणे प्रस्तावभक्त्यन्ते प्रस्तोत्रा कुशास्तरणाख्यवस्त्रविशेषे प्रागग्रा, उदगग्रा, वा निधीयते। कृशाविधानप्रकाराः त्रिवृत् पञ्चदश, इति नवप्रकारेषु अनेके भेदाः सन्ति तत्सर्वं विष्टतिभेद फलभेदप्रदर्शनपूर्वकं सम्यक् प्रतिपादितम्। चतुर्थाध्याये गवामयनाख्यः क्रतुः विहितः । स च द्वादशमाससाध्यः द्वादशसु मासेषु प्रथमान्त्याहप्रायणीयोदयनी-यातिरात्रे। मध्ये यावन्ति अहानि तेषु अभिप्लवषडहपृष्ठषडष्टनां ज्योर्तिगौरादीनां च क्रमविधानम्। विषुवदाख्यप्रधानहविर्धानम्, स्वरसाम्नां विधानं, महाव्रताख्यमहः, तेषां स्तोमविधानं, गवामयनशब्दार्थः उपस्थानादि च विधीयते। पञ्चमाध्याये महाव्रतहोतुः पृष्ठस्य पञ्चविधत्वम्। प्राणादिसाम्नां आहवनीयादि उपस्थानं, स्तोत्रकाले यजमानपत्नीनां वीणागानम्। वीणायाः शततन्त्रीत्व-कथनम्। उद्गातुः स्तोत्रकाले औदुम्बर्यासन्द्याख्यासनविशेषेऽवस्थाय स्तोत्रोपकरणादि, गवामयनस्य दीक्षाकालः उक्तः। षष्ठाध्याये सर्वप्रकृतिभूतस्य अग्निष्टोमस्योत्पत्तिः। द्रोणकलशस्योत्पत्तिः तदध्यूहनम्। अग्निष्टोमस्य ज्योतिष्ठोमत्वमपि कथं इत्यादि शङ्का, समाधानम्। बहिष्पवमानार्थं पञ्चर्त्विक्-प्रसर्पणम्। प्रस्तोत्रादीनां सर्पणे विच्छेदे प्रायश्चित्तविधानम्, बहिष्पवमान स्तोत्रसंख्या, तत्रोत्तमस्तोत्री-यायाः रथन्तरवर्णत्वं तत्र हिंकारस्य प्राशस्त्यम्, काम्यप्रतिपात् दीक्षितमरणे, अनृताभिशस्तस्य प्रयोगे द्वियजमानकप्रयोगे च प्रतिपद्विधानं इत्यादयः उच्यन्ते।

सप्तमाष्टमाध्याययोः विषयाः- बहिष्पवमानगाने प्रतिहारः अनिरुक्तगानं निधनानि च विधीयन्ते। आज्यस्तोत्रं तत्र देवताः माध्यन्दिनपवमानस्य विधिः, पृष्टस्तोत्रं रथन्तरसाम तस्य त्रैष्टुभत्वसम्पादनम्। आमहीभवादीनाम् विधानम्। बृहद्रथन्तयोः प्रस्तावप्रतिहारविचारादिवामदेव्य-वैराज-शाक्वर-रैवतानां स्तोत्रधर्माः



ब्रह्मसमविचारः, तस्य कामनाभेदेन सामविधानम्, आर्भवपवमानस्तोत्रे साम्नां विधानम्, यज्ञायज्ञीये नियमविधानम्, उक्थ्य स्तोत्रम्, उक्थ्यस्तोत्रीयासु तत्र साकमश्व-सौभर-नार्मेध-हारिवर्णानां विधानम्। उद्वंशीयाष्टांदष्ट्रयोः कामनाभेदेन विधानम्, सौभरस्य निधनभेदेन फलभेदः, इत्यादीनि प्रतिपाद्यन्ते।

नवमाध्याये अतिरात्राख्यः क्रतुः उक्थ्यस्तोत्रानन्तरे पञ्चदशस्तोमरात्रिपर्यायाणां त्रयाणां स्तवनं, ततः सन्धिस्तोत्राणि ततः आश्विनशस्त्रम्, ततः यज्ञपुच्छम्, अवभृथ इति तत्र रात्रिपर्यायसंज्ञक स्तोत्राणां विधाणां विधानं, तस्य प्रशंसा सन्धिस्तोत्रे कामनाभेदेन सामविधानम्, आश्विनशस्त्रं प्रभातात्पूर्वं समापनीयम्। एकत्र उभयोः यजमानयोः यागकरणे प्रातरनुवाकोपाकरणकाले सोमलताया अभावे पूतीकालताग्रहणं, तस्यालाभे अर्जुनाख्यतृणविशेषेण सोमयागः कार्यः, सोमापहरणे द्रोणकलशभेदेन सोमातिरेके सत्रयागमध्ये कश्चित् यजमानः यदि मृतः तदा प्रायश्चित्तं, महावीरभेदने यूपस्य प्ररोहे च प्रायश्चित्तम्।

दशमएकादशद्वादशाध्यायेषु विषयाः- व्यूढद्वादशाहाख्यः अहीनसत्रोभयात्मकः क्रतुः, तत् मध्यवर्तिषु दशसु अहस्सु प्रतिदिनं सोमयागः। तत्र त्रिवृत्प्रभृति अष्टाचत्वारिंशत् सोमपर्यन्तं सर्वेस्तोमाः प्रयुज्यन्ते। तेषां सृष्टिःप्रशंसा, गायत्र्यादीनां सृष्टिप्रकारः, द्वादशरात्रा-धिकारिप्रतिपादनं, दीक्षाफलं, तदन्तर्गतस्य ज्योतिष्ठोमस्य ज्योतिष्ट्वं तदन्तर्गतस्तोत्राणां भवति शतसंख्याकानां दशसंख्ययाविभागे दश शिष्यन्ते। दशाक्षरस्य विराट्त्वं दशाक्षराविराड् इति श्रुत्या ज्ञायते। विराट् छन्दसां मध्ये ज्योतिः, अतः ज्योतिष्टोमत्वम् इत्यादि व्यवह्रियन्ते। तत्रैव द्वादशरात्रक्रतौ एकैकस्मिन्नहनि बहिष्पवमाने आज्यपृष्टा-आर्भवपवमानादीनां सामविधानम्। पृष्ठस्य षडहस्य धर्माः, तत्र पृष्ठस्तोत्राणां कुत्र कस्य धर्मस्य प्रवृत्तिः इत्यादि वचनानि उच्यन्ते। तत्रैव उक्थ्यसंस्थया समाप्तिः षोडशिस्त्रोत्रविधानानि प्रतिपाद्यन्ते।

त्रयोदशचतुर्दशपञ्चदशाध्यायेषु उक्तविषयाः - द्वादशरात्रक्रतोरेव पञ्चदिनप्रभृतिस्तोत्राणां सामविधानम्। तत्र विकल्पे फलभेदाः स्तोमविधानम्। दशममहः अविवाक्यसंज्ञकम्। तत्र बहवो धर्माः निरूप्यन्ते। साम्नां स्तोत्रेण फलविशेष प्रदर्शनम्। गायत्र्यादीनां छन्दसां प्रयोगेण तत्तत्संपत्तिः। अन्तिमस्तोत्रस्य विराट् छन्दस्कस्य वामदेव्यस्य प्रशंसा तत्र त्रयस्त्रिंशदक्षरेषु गायत्र्यादीनां छन्दसां सत्वं तत्स्त्रोत्रेण पूर्यते अतः सर्वकामसिद्धिः एवं द्वादशरात्रस्य पूर्तिः।

षोडशसप्तदशयोः अध्याययोः विषयाः- त्रिकद्रुकाख्यानां त्रयाणां यागानां विधानं तत्र ज्योतिराख्यः प्रथमः, ज्योतिष्ट्वं तस्य कथमिति निर्वचनम्। प्रपञ्चसृष्टिकर्ता प्रथमतः सर्जनार्थं प्रवृतः तमसा आवृतत्वात् न किञ्चन प्रत्यभात्, अनन्तरं तपसा एदद्याख्यं अपश्यत् सपदि तमो विनष्टं ज्योतीरूपेणानेन तमोनाशात् अस्य ज्योतिष्ट्रत्वम्। एवं गौः आयुरिति द्वौ भागौ विधाय एतेषां त्रयाणां स्तोत्रसामविहितम्। विवृदादिनिवेशः, दक्षिणाविधिः, तत्स्तुतिः, अनन्तरं अभिजित्विश्वजित् सर्वजित् यागानां विधानम्। सर्वस्वदक्षिणाकत्वात् विश्वजितः नियमविशेषाः, त्रयाणां यागानां फलविशेषः, ततः सहस्रदक्षिणाकानां चतुर्णां विधानम्। पञ्चानां साद्यस्कानां चतुर्णां व्रात्ययज्ञानां विधानम्, ये स्वाश्रमविहितकर्माननुष्ठातारः निषिद्धकर्मानुष्ठातारः, ये व्रात्याः तेषामत्राधिकार इति प्रतिपादनम्, अथ पञ्चानाम् अग्निष्टुतां तत्फलानां स्तोमानां च विधानम्।

अथ अष्टादश, एकोनविंशाध्याययोः विषयाः- उपहव्यादयः वाजपेयः राजसूयः एते अत्र विहिताः। वाजं अन्नं पेयं द्रवात्मकं उभयमपि प्रपापीरेतेन प्राप्नोत्। अतः प्रजापतिना प्रथममनुष्ठिततत्वात् प्राजापत्यं पदं, अन्नाद्यप्राप्तिः, तथा अस्य फलं, ततः राजसूयः राजसूये क्षत्रियोऽधिकारी, तत्र सप्तसोमयागाः सन्ति। तेषु स्तोत्रनामानि, दक्षिणाविशेषः, फलविशेषश्च प्रतिपाद्यते। अनन्तरं राड्-विराड्- उद्भित्-बलभित्-इत्यादि द्वन्द्वक्रतवः तेषां कर्तव्यताकानां विधिः द्वन्द्वेषु



समानकर्तृकत्वं उपनयनस्य यागस्य वा अनर्हान् उपनीय याजयित्वा वा प्रकारान्तरेण निषिद्धद्रव्यप्रतिग्रहादिना वा नरकभीताः तादृशदोषनिर्हरणार्थं तैः क्रियमाणोऽयं पुनस्तोमाख्यः। तत्र स्तोत्राणि तत्र शुद्धाशुद्धीयसाम्नः महिमा, इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् इत्यादिना प्रदर्शितः।

विंशैकविंशद्वाविंशाध्यायेषु विषयाः- अतिरात्रसंज्ञका बहवः क्रतुविशेषाः विधीयन्ते। प्रथमं ज्योतिष्टोमातिरात्रस्य स्तोमक्लृप्तिः, तत्र ऋद्धिकामोऽधिकारी, तत्प्रशंसा, ततः सर्वस्तोमातिरात्रः तत्र स्तोमविशेषः, अधिकारी ऐश्वर्यकामः, अनन्तरं अप्तोर्यामः, तस्य सर्वकामावाप्तिः फलम्। ततः अतिरात्रक्रतवः गर्गत्रिरात्रस्य गोसहस्रं दक्षिणा, तस्याः विभागकथनं, शबलीहोमाद्यङ्गविधानं, शबलीहोमस्य स्वातन्त्र्येण कर्तव्यत्वं विचार्य समाधीयते। मन्त्रार्थश्च विशदीकृतः। अश्वमेधाख्यः त्रिरात्रः, तत्र विवृदादयः, प्रथमेऽह्नि द्वितीये एकविंशस्तोमः, तृतीये सर्वे स्तोमाः। अश्वप्रशंसा एकविंशयूपाः, यूपानां वृक्षाः, पशूनाम् अवदानं, शाखाविशेषविचारः। वैदत्रिरात्रादि त्रिरात्राणां विधानम्। चत्वारः चतूरात्राः तत्र स्तोमविधानम्। तत्र प्रशंसा, त्रयः पञ्चरात्राः, त्रयः षड्रात्राः, सप्त सप्तरात्राः, अष्टौ अष्टरात्राः, द्वौ नवरात्रौ, चत्वारः दशरात्राः, तेषां स्तोमविधानं, स्तोमसामानि, अधिकारी फलं, वेदनफलं प्रतिपाद्यते अन्ते पौण्डरीकविधानमपि।

अथ त्रयोविंशाध्याये विषयाः- द्वौ त्रयोदशरात्रौ, तत्र स्तोमाः, प्रथमस्य ऋद्धिः, द्वितीयस्य प्रतिष्ठा फलम्। त्रयः चतुर्दशरात्राः तेषां फलप्रशंसादिकम्। पञ्चदशरात्रप्रभृति द्वात्रिंशत्रात्रपर्यन्तं भागविशेषाः।

चतुर्विंशाध्याये विषयाः- त्रयस्त्रिंशत् रात्रमारभ्य संवत्सरसाध्यसत्रपर्यन्तं क्रमेण विधीयन्ते। अनन्तां श्रियमाप्तुकामस्य एकोनचत्वारिंशद्रात्रे सत्रं चत्वारिंशरात्रं, उत्तमपुत्रकामस्य, अदितिपुत्राः अष्टौ

सर्वामृद्धिं यया प्राप्ताः तद्वत् अन्ते अमृतत्वसाधनं, शतरात्रमभिधाय-सर्वसत्रप्रकृतिभूतं गवामयनं सर्वकामसमृद्धि फलमिति प्रतिपाद्यते।

पञ्चविंशाध्याये विषयाः - आदित्यानामयनं स्वर्गसाधनम्। सर्वकृद्धिसाधनं कुण्डपायिनामयनं, तापश्चितामयनं प्रजापतेः द्वादशसंवत्सरसत्रं स्वर्गसाधनं, शतसंवत्सरसाध्यं सत्रं एतादृशसत्राणां विधानम्, अन्ते विश्वसृजामयनं, सहस्रसंवत्सरसाध्यं तत्राधिकारी स्तोमविधानं, ब्रह्मणः सायुज्यं फलम्। मनुष्याधिकारित्वात् शास्त्रस्य सहस्रसंवत्सरपर्यन्तं न केनापि जीवितुं शक्यत्वात् सहस्रदिनानि सत्रं अनुतिष्ठेयुः इति मीमांसान्यायविचारपुरःस्सरं अष्ठौ पक्षान् प्रतिपाद्य अन्तिमः पक्षः प्रतिष्ठापितं, तदेष श्लोकः विश्वसृजः प्रथमे सत्रमासत सहस्रसमं प्रसुतेन यन्तस्तेह्नजज्ञे भुवनस्य गोपा हिरण्मयः शकुनो ब्रह्मनामेति ब्रह्मणः सालोकतां सार्ष्टितां सायुज्यं गच्छन्ति य एतदुपयन्ति तदेत् विश्वसृजां सहस्रसंवत्सरशतेन वै विश्वसृजः सर्वामृद्धिम् आर्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति। य एतदुपयन्ति इति। ताण्ड्यब्राह्मणस्य विषयाः सूचिताः ओम्।

**द्वितीयं षड्विंशब्राह्मणम्**

अत्र ब्राह्मणे ताण्ड्यब्राह्मणे अनुक्ताः विषयाः उच्यन्ते तस्मात् षड्विंशब्राह्मणम् इति व्यवहारः क्रियते। अस्मिन् ब्राह्मणे ज्योतिष्टोमादिषु भागेषु सुत्याहात्पूर्वं दिनत्रयं प्रवर्ग्याख्यं कर्म कृत्वा उपसन्नामकदृष्टिः क्रियते। तत्र साम्नि यद्यपि इन्द्रविशेषणानि सन्ति गौरावस्कन्दिन्नहल्यायैजारमघवनित्यादीनि, तथापि नात्रेन्द्रमात्राह्वानं इन्द्रमुखेन भागोद्देश्य सर्वदेवाह्वानमेव क्रियते इति अपाद्यते ब्रह्म च वा इदमग्रे सुब्रह्मवास्तां ततः सुब्रह्मेदक्रामत् इत्यादिना। सुब्रह्मपदेन इन्द्राभिन्नः आदित्यपर्व अभिधीयते असावादित्यः सुब्रह्म इत्युक्तत्वात्। तस्यास्ते पृथिवीपादः। अन्तरिक्षं पादः। द्यौः पादः। इत्यादिना सार्वत्म्योपपादनात् तादृशादित्यस्यैव सर्वात्मत्वं अभिधीयते। सूर्य आत्मा जगतस्तस्थुषश्च इति मन्त्रोऽपि एतदेवाह। अन्ते च देवाः ब्रह्माणः



इति सामान्यतः देवान् ब्राह्मणां च सम्बोध्य आगच्छत इति त्रिरादृनात् देवानां ब्राह्मणानां च सुत्यादिवसे हविर्दक्षिणाऽदान्नार्थं पृथक् आह्वानं क्रियते सुब्रह्मण्यमन्त्रः स्त्रीपुंनपुंसकरूपः ऋग्यजुस्सामरूपश्चेत्यभि-धीयते। एतावत् विषयपरिज्ञानं सुब्रह्मण्याह्वानस्य ऋत्विजः आवश्यकमिति तस्मात् एवंविदमेव सुब्रह्मण्यं कुर्वीत नानेवेविदं इत्यादिना प्रतिपाद्यते, ततः एकच्छन्दः प्रातस्सवनं इत्यादिना प्रातस्सवनस्यैकच्छन्दस्त्वं माध्यन्दिनस्य त्रिच्छन्दस्त्वं आर्भवस्य पञ्चच्छन्दस्त्वम् इत्यादिना तत्स्वरूपं निरुप्य, विश्वरूपागानप्रकारः तस्य प्रशंसा, ब्रह्मणः ज्ञातव्यविशेषाः, वेदत्रयसारत्वेन व्याहृतित्रयस्योत्पत्तिः। तिसृभिः व्याहृतिभिः एव त्रीन् लोकानुत्पादयामास । ऋगादिवेदे मन्त्रविभ्रंशे भूरादिव्याहृतिभिः होमः प्रायश्चित्तम् हविषः न प्रायश्चित्तम्। सौम्यचरुम् अधिकृत्य केचन विषयाः तत्प्राशनम् इत्यादि कथ्यते।

द्वितीयेऽध्याये अग्निष्टोमे बहिष्पवमानगाने ऋगक्षराणां स्थाने ओङ्कारनिवेशं कृत्वा गातव्यम्। अस्य धूर्गानमिति संज्ञा। तत्र प्रतिस्तोत्रीयं वेदः स्तोत्रीयाणं रेतस्यां इति संज्ञा तासु विशेषगानं तेषां निर्वचनं धूर्गाने ज्ञातव्या बहवो विषयाः होत्रादीनाम् अग्न्यादिरूपत्वं च सयुक्तिकं निरुपितम्।

ततः उद्गातृचमसोत्कर्षः वषट्कर्तुरपि न भक्षणम्। सवनत्रयेऽपि औद्गात्रोपह्वयः इति विषयाः निरूप्यन्ते।

**तृतीयचतुर्थाध्याययोः विषयाः**

होत्रादीनामृत्विजां मन्त्रभ्रेषे यजमानस्य बहुविधदोषाः सम्भवन्ति। तेषां परिहाराय प्रायश्चित्तहोमः। यजमानस्य यागानन्तरं पशुपुत्रयोगक्षेमादिबाधा स्यात् होत्रादिमन्त्रभ्रंशेनैव जातम् इति जानीयात्। तदर्थं प्रायश्चित्तम्। ऋत्विजां देवत्वेन भावनं, देवर्त्विग्वरणं देवयजनप्रार्थना देवयजनं नाम भागश्चलं देवयजनलक्षणं प्रागुदक्प्रवणं देवयजनपश्चाद्दक्षिणाप्रवणं श्मशानकरणं यत्र जले सिच्यमाने प्राञ्चं उदञ्च वा दिशं प्रति सरति तत् देवयजनं, प्रत्यञ्चं दक्षिणां वा स्यात्।

त्रिशुक्रियमितिप्राह यस्य पुरस्तात् त्रीणिज्योतींषि दश्येरन् अग्निराप आदित्यः तद्देवयजनं तत्त्रिशुक्रियं देवयजनस्य प्राग्देशे आहवनीयाग्निः सूर्यश्च वर्तते तडागः कूपो वा यदि स्यात् तत् त्रिशुक्रियं इत्यादि लक्षणम्। अवभृथसाम्नि विद्यमानानां पदानां निर्वचनं तत्र वक्तव्यविशेषाः।

अत्र शत्रुनाशनार्थं श्येनः, इषुः सन्दंशः वज्रमित्यादि अभिचारक्रतवः अनेकाः तत्र त्रिवृदादीनां विष्टविविधिः द्वादशादे वक्तव्यविशेषाः। ततः त्रयोदशदिनसाध्यं वैश्वदेवसत्रं गार्हपत्यादीनाम् अग्नीनामुत्पत्तिप्रकारः कथ्यते, अग्निहोत्रहोमः पुत्रर्त्विगादिभिः अपि कर्तुं शक्यते। ऋत्विगपेक्षया पुत्रस्य तदपेक्षया स्वस्य होमे विशेषफलम् अग्निहोत्रेण सर्वक्रतुफलं सिद्ध्यति। औदुम्बरीलक्षणं तस्यादेवतात्वेन अनुसन्धानम्, यूपलक्षणं, कामनाभेदेन द्रव्यविशेषाः, वेतसं ब्रह्मवर्चसकामस्य पालाशं पुष्टिकामस्य क्रमुका अश्वत्थपाषाणां यशस्कामस्य इत्यादि यूपस्य सर्वदेवतास्वरूपत्वं ततः सन्ध्यादेवतायाः स्वरूपनिरूपणं सन्ध्योपासनस्य विशिष्टं फलं सन्ध्योपासनस्य कालः स्वाहादेव्या उत्पत्तिप्रकारः, तस्याः गोत्रादि अक्षराणि तस्या पव पितृकार्येषु स्वधारूपेण, यज्ञेषु वषट्काररूपेण अवस्थान इत्यादि विषयाः वर्तन्ते।

**पञ्चमाध्याये उक्तविषयाः**

अद्भुतशान्तिप्रकरणम्। गृहे नगरे आलये राजप्रासादे वा उत्पातदर्शनं प्रजानाम् अकालमरणं दुःस्वप्नदर्शनम् इत्यादयो अरिष्टविषयाः तेषां परिहाराय होमः, गृह्याग्नौ क्रियमाणः स्थालीपाक, अनन्तरं सामपश्च अथातोऽद्भुतानां कर्मणां शान्तिं व्याख्यास्यामः पालाशानां समिधाम् अष्टसहस्रं जुहुयात् ऐन्द्रयाम्य, वारुणदाग्नेय वायव्य सौरभ्यवैष्णवेत्यष्टौ इत्यारभ्य स्वस्ति हास्य भवति, इत्यन्तम् एवं सामान्यतः कर्माणि विधाय तदरिष्टसूचकानां परिहारः प्रतिपाद्यते। देवाथवा असुराथेषु लोकेष्वस्पर्धन्त इति उपाख्यानमुखेन शत्रुविजयार्थं कश्चन स्थालीपाकमनेकद्रव्यसाध्यं विधत्ते। ततः गृहे यदि



वज्रवैडूर्यादयो मणयो विदीर्यन्ते राजकीयाधिकारिणा साकं विवादो वा जायते गानशय्यासनादयो वा भजन्ते गजाश्वादयो वा अकाले म्रियन्ते, एवम् यजमानस्य अरिष्टसूचकाः। तत्परिहाराय इन्द्रदैवत्यः स्थालीपाक सामगानसहितः प्रतिपाद्यते। सप्राचीं दिशमन्वावर्तते अथ यदा अस्य मणिककुम्भस्थलीविदरणमात्रासोराघकुलविवादो वा यानञ्चात्र शय्यासनावसव्यध्वजपताका गृहैकदेश प्रभञ्जनेषु गजवाजिमुख्या वा प्रमीयन्ते। एवमादीनि इन्द्रदैवत्यानि अद्भुतानि प्रायश्चितानि भवन्ति । इन्द्रायेन्दो मरुत्वत इति स्थालीपाकं कृत्वा पञ्चभिराज्याहुतिभि अभिषुद्येति इन्द्राय स्वाहा शचीपतेस्वाहा वज्रपाणये स्वाहा ईश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिः हुत्वा अपसाम गायते चेत् इति।

एवं शरीरे व्याध्यादिपीडा-अतिस्वप्न-अतिभोजन- आलस्य — व्रण-अजीर्ण-इत्यादि यमदैवत्यानि, क्षेत्रगृहसंस्थेषु धान्येषु आरकपतङ्ग पिपीलिकादयः हिंसन्ति एतत् अरिष्टनिवृत्यर्थं वरुणदैवत्यशान्तिः। कनकरजतवरवस्त्रादयः वियुज्यन्ते, कार्येषु प्रवृत्तिवैफल्यं दर्शनम् काकादीनां गृहमध्ये दर्शनं, पृथिवीस्फोटनकम्पनादि, वृक्षेषु रुधिरस्रवणं, देवालयस्य देवतानां कम्पनं स्फोटनं, गवां गृहेषु धूमोत्पत्तिः, रुधिरस्रवणं, देवालयस्य देवतानां गोषु, मानुषमहिषादि जननं हीनाङ्गातिरिक्ताङ्गविकृतरूपशिशुजननं पर्वतस्फोटनं, अश्मप्लवनं. इत्यादीनि राष्ट्रजनताभयसूचकानि तेषां परिहाराय, धनदा, अग्नि, वायु, सोम, विष्णु रुद्रदैवत्यानि स्थालीपाकसाम-जपात्मकानि प्रायश्चित्तानि विधीयन्ते। अत्र देवता प्रतिपादनेन तत्तत् आयुधोपेतत्वेन क्रियते। वज्रपाणये, दण्डपाणये, चक्रपाणये, शूलपाणये, इत्यादिना देवतानां विग्रहवत्वप्रतिपादकस्य अस्य वाक्यस्य प्रमाणान्तरेण अनुवादबाधयोः अभावात् भूतार्थप्रतिपादकत्वं वक्तव्यम्। प्रशंसया देवानां विग्रहवत्वमपि श्रौतेन अनेन प्रमाणेन सिद्ध्यति इति षड्विंशब्राह्मणस्य विवरणम्।

## तृतीयं सामविधानब्राह्मणम्

जगदुत्पत्तेः पूर्वं शुद्धं ब्रह्मैवासीत् ततः मायावशात् हिरण्यगर्भः विराट्, ततः स्थूलप्रपञ्चः उत्पन्नः। अनन्तरम् उत्पन्नाः प्रजाः आहारार्थमरुदन्। प्रजापतिः जीवनसाधत्वेन सप्तस्वरात्मकं साम तेभ्यः प्रायच्छत्। ततः क्रुष्टादि सप्तस्वरेण साम्ना प्रयुज्यमानेन देव मनुष्यगन्धर्वाप्सरः पशुपित्र्यसुररक्षांसि ओषधीवनस्पतयः स्थावरा अपि तृप्ता अभवन् इति प्रतिपाद्यते। ततः प्राजापत्य, अतिकृच्छ्र, कृच्छ्रातिकृच्छ्राणि विधीयन्ते। अनन्तरं अग्न्याधान-दर्शपूर्णमास-चातुर्मास्याग्निष्टोमादि सप्त संस्थाः गवामयनापधितामयनादि सत्र भागानां फलसाधनानि सामानि सप्रयोगाणि अमृतसंहिताः स्वर्गसंहिता रुद्रविष्णुगणपतिस्कन्दपितृसूक्तानि विधीयन्ते ततः प्रायश्चित्तप्रयोगाः, ब्रह्मवरणे, अगम्यागमने, राजप्रतिग्रहे, ब्राह्मादिहिंसायां, अनृतवदने, अविक्रयविक्रये, अविक्रयक्रये, सूर्याभ्युदितसूर्याभिनिर्मुक्तत्वादौ च प्रायश्चित्तार्थया सामजयः। काम्यानां दृष्टार्थानां प्रयोगारम्भात् पूर्वं कृच्छ्रानुष्ठानपूर्वकं त्रिरात्रमुपवासः, पुष्यर्क्षे समारभेदिति नियमः, शतवर्षासुः साधनसामजपः, पापनिर्हरणार्थं पवित्रवर्गः, स्त्रीणां गर्भ एव शिशुमृतिदोषनिवारकसाधनं, सत्पुत्रप्राप्तिसाधनं पिशाचब्रह्मराक्षसा-दि बाधानिवर्तकं सर्वशस्त्रविषादिभयनिर्वर्तकं, अन्नलाभसाधनं, यात्रायां भये तन्निवर्तकम्, स्त्रियाः पुरुषस्य च वशीकरणोपायः, सौभाग्यप्रदं, सर्वजनप्रियंकरं यशो ब्रह्मवर्चसादिजनकं राजसभायां जनप्रदं च सूक्तं इत्यादयो विषयाः प्रतिपादिताः। ऐश्वर्यधनधान्यलाभाय सामजपः, वास्तुहोमप्रयोगः, निधिदर्शनप्रयोगः, अपुनर्भवसाधनं, देवताप्रत्यक्षोपायः स्वेच्छया गमन, त्रिलोकवशीकरणसाधनानि उक्त्वा एतत् ग्रन्थावरणं ब्रह्मा बृहस्पतये, स नारदाय, स व्यासाय, स जैमिनये एवंरुपेण अस्माकमागतमिति निरुप्य गुरुविधिमुक्त्वा पूर्तिमगमत्। इति सामविधानब्राह्मणविषयाः।।



## चतुर्थम् आर्षेयब्राह्मणम्

आर्षेयब्राह्मणे प्रकृतिसाम्नां प्रत्येकं ऋषीन् ज्ञापयति, साम्नाम् ऋषिच्छन्दोदेवता परिज्ञानपूर्वप्रयोग एव फलप्रदो भवति अन्यथा विपरीतफलत्वं च श्रूयते। ऋषीणां नामधेयगोत्रोपधारणं स्वर्ग्यं यशस्यं धन्यं पुण्यं पुत्र्यं पशव्यं ब्रह्मवर्चस्यं स्मार्तमायुष्यम् इत्युक्त्वा, अथापि ब्राह्मणं भवति योहवा अविदित्वार्षेयछन्दो दैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुवार्छति गर्तम् वा प्रजामीयते पापीयान् भवति। साम्नां च्छन्दोदेवते मियते ऋषिरेव भिद्यते। येनर्षिणामत्सामदृष्टं तस्य साम्नः स ऋषिः तादृशऋषिच्छन्दो देवता परिज्ञानात् स्वर्गादिपुण्यलोकावाप्तिः, यशः प्राप्तिः, धनपुण्यपशुप्राप्तिः ब्रह्मवर्चसाख्यतेजोविशेषः, स्मृत्युक्तं पूर्णमायुः भवति ऋषिच्छन्दो देवता परिज्ञानाभावेन याजने अध्यापने वा कृते स्थावरजन्मप्राप्तिः नरकानुभवः, आत्मायुष्ट्रवं पापीयस्त्वं च भवति। अत्र अवश्यज्ञेयत्वात् छन्दोदेवतापरिचयस्य स्वरुपता एवागन्तुं शक्यत्वात् ऋषीणां ज्ञापनमनेन क्रियते इति आर्षेयब्राह्मणं इति शङ्का।

## पञ्चमं देवताध्यायब्राह्मणम्

अत्र ब्राह्मणे प्रकृति साम्नां देवता निर्देशत्वात् देवताध्याय इति संज्ञा यद्यपि सामाधाराभूतायाः ऋचः अर्थनिरुपणे देवता परिज्ञानं भवति। न तदर्थम् पृथकारम्भः कार्यः इति शङ्का उदेति। तथापि अर्थबोधं विना सामस्वरुपनिरुपेणैव देवतापरिज्ञानं यथा भवति तथा अत्र निरुप्यते। किञ्च ऋगर्थनिरुपणे प्रतिसामभिन्नैव देवता स्फुरेत्। इदं तु ब्राह्मणं सर्वेषां साम्नां दशभिरेव देवताभिः देवता परिज्ञानं तदपेक्षात्रिभिरेव देवता गणैः तदनन्तरं एकयैव देवतया सर्वेषां साम्नां देवता परिज्ञानं यथा भवति तथा लाघवेन बुद्ध्यारुढतां गमयति देवताः अग्निरिन्द्रः प्रजापतिस्तोमोवरुणस्त्वाङ्गिरसः पूषा सरस्वती इति दश देवताः अभिधाय इडानिधनानि पदनिधानी इकारनिधनानि इत्यादि आग्नेयानि इति एतादृशनिधनवत्वेन देवताकत्वं निधनान्तरत्वेन

इन्द्रादिदेवताकत्वं, इति निधनज्ञानेन देवताज्ञानं सम्भवतीति ज्ञायते। वसूनां स्वाराणि, रुद्राणां निधनवन्ति, आदित्यानामैडानि, इत्यादिना सर्वेषामपि साम्नां त्रिदैवत्यत्वमभिधाय अन्ते सर्वाणि ब्राह्माणि इति अत्यन्तलघुभूतं सर्वेषां ब्राह्मत्वं विधत्ते। सर्वेषामपि साम्नां ब्रह्मण आविर्भूतत्वात् उपनिषदिति गोपनीयत्वेन अभिधाय ऋग्वै माता साम पिता इति ऋग्सामयोः मातापितृत्वं व्यपदिश्यते

तज्ज्ञानस्य फलं च श्रूयते अथातः छन्दसां वर्णाः इत्यादिना गायत्र्यादीनां छन्दसां वर्णा उच्यन्ते। अनन्तरं अग्नेगायञ्च भवत् इत्यादिना जगतीपर्यन्तनाम् अतिछन्दसां विच्छन्दसां च देवता अभिधायन्ते। अथातो निर्वचनं इत्यादिना गायत्र्यादीनां निर्वचनं गायत्री गायतेः स्तुतिकर्मणः उष्णिक् उत्स्नानात् इत्यादिना अभिधीयते। अथ सावित्र्यङ्गानि व्याख्यास्यामः इत्यारभ्य सावित्री देव्याः शिरः ब्रह्मा ललाटं द्यौः, चन्द्रादित्यौ चक्षुषी, मुखमग्निः, इत्यादिना सर्वदेवतात्वकत्वमुक्त्वा एतत् ज्ञानस्य गायत्रीमन्त्रप्रयोगे अक्षरस्वरादिभ्रेषदोषनिवर्तकत्वं अभिधाय गायत्रः विशदरूपस्य परिज्ञानं द्विजानां सर्वेषामपि आवश्यकम्। अतः इदं ब्राह्मणं न केवलं सामगानाम्।

**षष्ठं छान्दोग्यब्राह्मणम्**

छान्दोग्यं दशप्रपाठकात्मकं, तत्र आदिमौ द्वौ मन्त्रब्राह्मणाभिधेयौ प्रथमप्रपाठके विवाहमन्त्राः पुंसवनसीमन्तजातकर्मनामकरणचौलोपनयनमन्त्राः, समावर्तनमन्त्राः, काम्यकर्मोपयुक्तमन्त्राः वर्तन्ते। द्वितीये प्रपाठके सर्वबलिमन्त्राः, आग्रयणमन्त्राः, पशुप्रयोगमन्त्राः, अष्टकान्वष्टकामन्त्राः, काम्यप्रयोगमधुपर्कमन्त्राः पठ्यन्ते। अनन्तरम् उपनिषत्- उप समीपे नि निधिना सह स्थानम् इति ज्ञानार्थं गुरोः समीपे स्वविनयं स्थितिरित्युपनिषदित्युच्यते। अस्यामुपनिषदि उद्गीथोपासना शिलकचौकितायन प्रवाहणकाणां संवादः, विविधसाममन्त्राणां उपासना पञ्चसामानि सप्तभक्तिसामानि प्रातस्सवनादिमन्त्राश्च सन्ति।



आदित्य गायत्री ब्रह्मोपासना, शाण्डिल्यविद्या, विषयाः अनन्तरं जानुश्रुतिः रैक्वसंवादः, संवर्गविद्या, षोडशकलाविद्या, उपकोसलविद्या, इत्यादि अनेकोपासनाक्रमाः मोक्षसाधनक्रमाः वर्णिताः। अथ संहितोपनिषत् विषयाः आर्चिकगानसंहितयोः देवासुरार्षभेदेन त्रैविध्यम्। मन्द्रस्वरेण कैश्चिदप्यश्रूयमाणतया गानं दैवं परोक्षं स्वर्गसाधनम् । सर्वैरपि श्रूयमाणतया बहिरास्थायगानमासुरं प्रत्यक्षं पश्चादिदृष्टमात्रफलम्। गृहे बाह्ययज्ञादिपरोक्षतया बहिर्यागादौ प्रत्यक्षतया गानं परोक्षप्रत्यक्षगानं ब्रह्मवर्चसफलम्। पारलौकिकफलोद्देशेन प्रयुज्यमानं दैवं अन्नपानादिदृष्टामेव प्रयुज्यमानगानम् आसुरम्। पुनः त्रैविध्यं देवदृः वाक् शवक् अमित्रदूः इति भेदेन पुनरपि शुद्धा अदुस्पृष्टा अनिभृजेति त्रैविध्यमुक्तम्। अथैतस्तिस्रः संहिता भवन्ति वायोरिन्द्रस्याग्नेः स्वावृद्धावायोः सर्ववृद्धेन्द्रस्तोत्रपरोक्षवृद्धाऽग्नेः इति वायव्यादि भेदेन संहिता उक्ताः।

लोपादिहारादिलक्षणानि स्तोमानां प्रवृतिः कर्षणभेदाः अन्तरस्य यकारनिवेष्ठाप्रकारः। भकारसामलक्षणम्, उद्गातृयजमानयोः ज्ञातव्यम्, अदाने दोषाः, यदि प्रयुज्यमानानां साम्नामूहप्रकारः उदूहलक्षणम्, आरण्यके उदूहः, लाङ्गलकालवविशाध्यायनिनाम् गानप्रकारः, विद्यादानपात्रम्, विद्यादाने षड्धर्माः, निमित्तं, तादृशपात्रालाभे विद्यया सहमर्तव्यं, न अपात्रे दातव्यम्, वेदप्राप्तौ अष्टावुपनिषदः, सम्पूर्णदशी असम्पूर्णदशीलक्षणम्, अन्ये च शिष्यधर्माः निरूप्यन्ते। गुरुदक्षिणाविधिः, तत्प्रसङ्गेन दानान्तराणामपि प्राशस्त्यम्, दानानामध्ये गोपृथिवीविद्यादानानां श्रैष्ठ्यम्, अन्ते शिष्यधर्मान्तराणि उच्यन्ते।

**सप्तमं वंशब्राह्मणम्**

अस्मिन् ब्राह्मणे खण्डत्रयं विद्यते। अत्र अध्येतृपरम्परा अभिधीयते। त्रैवर्णिकानां जन्म द्विविधम्। एकं मातापितृभ्यां जातं सर्वैः अवगम्यते। अपरं गायत्र्याख्यमात्रा आचार्याख्यपित्रा च सम्भवति

विद्याख्यम्। शरीरदानापेक्षया विद्यादात्रोः मात्रापित्रोः महिमातिशयः प्रदृश्यते स्मृतिषु। तादृशाचार्यपरम्परा शर्वदत्तणार्यप्रभृति ब्रह्मपर्यन्तम् अयमस्मादधीतान् इति प्रदिश्येते अत्र।

नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय च। उपजायत शर्वदत्तात् गार्ग्यात् शर्वदत्तो गार्ग्यो रुद्रभूतेः द्राह्यायणात् इति । अत्र उपजायत इति पदं प्रयुक्तं धनेः प्रयुक्तत्वात् विद्यातः अपि जन्म प्रतिपद्यते इति ज्ञायते। प्रथमतः ब्रह्मणे अथ ब्राह्मणेभ्यः ततः आचार्येति ऋषिभ्यः देवेभ्यः वेदेभ्यः नमस्कृत्य ब्राह्मणमारभ्यते। अतः आचार्यभक्तिः तान् प्रति प्रह्वीभावः प्रत्यहमनुसन्धानम् इत्यादिकं विद्यासंरक्षणाय श्रेयःप्राप्तये आवश्यकं भाति। एतत् ब्राह्मणस्था ऋषयः उपाकर्मणि उदकाञ्जलिभिः तर्प्यन्ते अद्यापि सामगैः आचार्येभ्यो नमः कृत्वा अथ वंशस्य कीर्तयेत्। स्वधा पूर्वेषां नेताऽयुः दीर्घमश्नुते इति उक्त्वा अनुक्रामेत् वंशब्राह्मणः इति वंशब्राह्मणं समाप्तम्।।

****



## 7.सामवेदे राष्ट्रिय-एकतायाः सन्देशः

**प्रो.सत्यनारायण आचार्यः**
प्राचार्यः, साहित्यविभागः,
राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः

वैदिकवाङ्मये सामवेदस्य महत्त्वं सर्वजनविदितमेव । श्रीमद्भगवद्गीतायां "वेदानां सामवेदोऽस्मि" इति कथनात् वेदस्यास्य वैशिष्ट्यमपि ज्ञायते । वस्तुतो यः सामवेदं जानाति स एव वेदतत्त्वं वेत्तीति बृहद्देवताग्रन्थे प्रतिपादितं -"सामानि यो वेत्ति स वेद तत्त्वम्" (बृहद्देवता - ८.१३०) । वेदेऽस्मिन् राष्ट्रस्य एकतायै मानवजीवनस्य पूर्णतायै च वार्त्ता प्रसारिता वर्तते । शोधपत्रेऽस्मिन् एतद्विषये किञ्चित्सूच्यते ।

**सामवेदे समाजदर्शनसन्दर्भे राष्ट्रिय-एकतायाः सन्देशः** - समाजं विना मानवजीवनस्य पूर्णतायाः परिकल्पना कर्तुं न शक्यते, अतः समाजव्यवस्थायाः आधारेण आदर्शराष्ट्रस्य निर्माणं सम्भवति । तदर्थं वैदिकवाङ्मये वर्णाश्रमव्यवस्थायाः प्राधान्यं परिकल्प्यते । आधुनिकसमाजशास्त्रिणः मनुष्यसमाजं जीवस्य शरीररूपेण परिकल्पयन्ति। तत्र समाजरूपकस्य शरीरस्य चत्वारि प्रमुखानि अङ्गानि भवन्ति ।

यथोक्तं -ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः" इत्यादिः । वैदिककाले वर्णव्यवस्थेयं कर्मणः प्राधान्येन प्रवर्तिताऽऽसीत् । अतः सामवेदे वर्ण्यते यत् -

य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम् । ये वा जनेषु पञ्चसु । (सामवेदः - ८/११६४)

अर्थात् हे परमेश्वर ! ये प्राणिनः सरलस्वभावाः, गृहस्थाः अथवा पञ्चजनेषु (चत्वारः वर्णाः, निषादः पञ्चमः वर्णः) वर्तन्ते ; ते अस्मत्कृते कल्याणकारिणो भवन्तु।एवमेव ब्रह्मण-क्षत्रिय-वैश्य-शूद्रादीनां कर्तव्य-परायणतां स्थिरीकृत्य समाजव्यवस्था सुदृढीकृतेति वक्तुं शक्यते।

वैदिककाले मनुष्यजीवनं चतुर्भि: आश्रमै: विभक्तम् । ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-संन्यासनामकै: चतुर्भिराश्रमै: मनुष्यजीवनस्य साफल्यं भवति स्म । अत: मोक्षप्राप्तिसन्दर्भे सामवेदे लिखितं यत् -

अपघ्नन्पवते मृधोऽप सोमो अराव्ण:। गच्छन्निन्द्रस्य निष्कृतम्। (सामवेद: - ५/५१०)

अर्थात् एभि: चतुर्भिराश्रमै: क्रमश: मानवस्यान्त:करणे विद्यमानानां दुर्गुणानां विनाशेन आत्मा पवित्रो भूत्वा मोक्षं प्राप्नोति । तत्र गृहस्थाश्रमे जीवनस्य साफल्यं वर्णितं यथा -

अक्रांत्समुद: प्रथमे विदर्मं जनयन् प्रजा भुनवस्य गोपा: ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सो वावृधे स्वानो अद्रि: ।।
(सामवेद: - पूर्वार्चिकम् - ५/५२९)

सर्वेष्वाश्रमेषु प्रसिद्ध: गृहस्थाश्रम: । आश्रमेऽस्मिन् परमपुरुषार्थस्य प्राप्ते: जीव: परमेश्वरं प्रार्थयति । तदुक्तं -

पुरुतमं पुरुणामीशानं वार्याणाम् । इन्द्रँ सोमे सचा सुते ।
(सामवेद: - उत्तरार्चिकम् - १/७४१)

सामवेदे राजनीतिव्यवस्थया राष्ट्रियैकताया: सन्देश: - वैदिककाले राज्ञ: विषये सुविचारा: वर्णिता:। राजा प्रजानां हितैषी, न्यायदाता, सज्जन इति वर्णित: । विद्वान् एव राजा भूत्वा राष्ट्रं रक्षितुं पारयति इति सामवेदे वर्णितम् । यथा -

यँ रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । न कि: स दभ्यते जन:। (सामवेद: - भाषाभाष्ये - पूर्वार्चिक: - २/१८५)

अर्थात् हे मनुष्या: ! हितैषी, न्यायकारी तथा उत्तम: ज्ञानवान् पुरुष: यस्य रक्षां करोति, कोऽपि तस्य हानिं कर्तुं न शक्नोति इति । तत्र राज्ञ: कर्तव्यविषयेऽपि सामवेदे वर्णितं -

कदा वसो स्तोत्रँ हर्यत आ अव श्मशा रुधद्वा: ।
दीर्घं सुतं वाताप्याय ।। (तत्रैव पूर्वार्चिक: - २/२२८)



अर्थात् हे ऐश्वर्यवान् राजन् ! यदि कदाचित् जलवृष्टि: न भवति, तदा प्रजावर्गस्य कृते जलप्रदानाय जलाशयानां निर्माणं करोतु भवान् इति । यथा सूर्य: स्वकिरणै: जलं संगृह्य मेघद्वारा सकलप्राणिनां कृते मधुरजलप्रदानेन मङ्गलं विदधाति, तथैव राजाऽपि करग्रहणेन उत्तमव्यवस्थाद्वारा प्रजानां मङ्गलं विदध्यादिति सामावेदे उद्घोषितं यथा - स्वादोरित्था विषूवतो मधो: पिबन्ति गौर्य: ।

या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ।
(तत्रैव - ४/४०९)

प्रजानां सर्वथा संरक्षणं शतॄणां कबलात् राष्ट्रसंरक्षणं राष्ट्रपते: राज्ञ: परमं कर्तव्यमिति सामवेद उपदिशति -

प्रेह्यभीहि धृष्णुहि न ते वज्रा नि यँ सते ।
इन्द्र नृम्णँ हि ते शवो हनो वृत्तं जया अपोऽर्चन्ननु स्वराज्यम् ।।
(तत्रैव - ४/४१३)

सामवेदे धर्मदर्शनेन राष्ट्रियैकताया: सन्देश: - वैदिकसाहित्ये मनुष्यजीवनस्य परमं चरमं च लक्ष्यं धर्मार्जनमिति ।
तदुक्तं सामवेदे -

प्र भुर्जयन्तं महां विपोधां मूरैरूरं पुरां दर्माणम् ।
नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वर्मणा धनर्चिम् ।।
(तत्रैव - १/७४)

ईश्वर: सदा वन्दनीय:, तदीयं स्वरुपमवर्णनीयम् । स हि सदैव मानवमात्रस्य सहायक: । तदीयस्तुत्या जगत: कल्याणमिति वर्णितं यथा - वृत्रस्य त्वा श्वसथादोषमाणा विश्वेदेवा अजहुर्ये सखाय: ।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वा: पृतना जयासि ।।
(तत्रैव - १/३२४)

अर्थात् हे जीवात्मन् ! यानि इन्द्रियाणि तव मित्राणि तेऽपि पापकर्मणा प्रभाविता: त्वां परित्यजन्ति । केवलं प्राणा एव त्वया सह यान्ति । यदि एते सर्वेऽपि तव सहकुर्वन्ति, तर्हि त्वं पापजातं जेतुमर्हसि ।

धर्मानुसारं मनुष्यस्य मोक्षप्राप्तिरेव परमगतिरित्युच्यते । मनुष्य: परमेश्वरस्य स्तुत्यैव मोक्षं प्राप्तुमर्हति । तदुक्तं -

तरत्स मन्दी धावति धारा सुतस्यान्धस: ।
तरत्स मन्दी धावति । (तत्रैव - ५/५००)

आचारादिदर्शनेन राष्ट्रियैकताया: सन्देश: - वेदविहितमार्गेण मनुष्यस्य दैनन्दिनमाचरणं पवित्रं भवेत् । संसारे ईश्वर एव सत्य:, अत: सत्याचरणं जीवनस्य व्रतं स्यात् । तदुक्तं -

मा चिदन्यद्धि शँसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणँ सचा सुते मुहुरुक्था च शँसता ।।
(तत्रैव - ३/२४२)

अर्थात् हे मित्र ! सत्यस्य विपरीतं मा वद । कस्मैचिदपि दु:खं नैव दातव्यम् । कामनाया: पूर्णकर्तारं परमेश्वरं स्मर, सर्वदा वेदमन्त्रान् पठ इत्यादि: ।

शिक्षादर्शनेन च मनुष्याचरणमपि सुसंस्कृतं भवतीति आदर्शशिक्षकस्य वाक्यपरिपालनेन समुचितं राष्ट्रं निर्मातुं शक्यते । तदुक्तं - अत्यायातमश्विना तिरो विश्वा अहँ सना ।
दस्रा हिरण्यवर्तनी सुषुम्णा सिन्धुवाहसा माध्वी मम श्रुतँ हवम् ।।
(तत्रैव - उत्तरार्चिक: - १९/१७४४)

अर्थात् हे अध्यापका: ! मया समस्तविद्या भवदधिगता । सर्वदा अस्माकं दु:खदूरीकरणैकव्रता:, हिरण्यादि-प्रयोगकर्तार:, परमेश्वर-सविधे अस्मान् प्रापयितुं प्रयत्नशीला:, मधुविद्याया: विज्ञातार: भवन्त: ममाह्वानं शृण्वन्तु, मां च संसारसागरं तरयन्तु इति ।

उपसंहार: - वैदिकवाङ्मयस्य परिशीलनेन ज्ञायते यत् अस्माकं राष्ट्रस्य संस्कृति: तत्रैव सुरक्षिता । अस्माकं मातृभूमि: जननीव वन्दनीया भवति । मातृभूमे: गौरववर्धनेन राष्ट्रगौरवं संवर्धते । राष्ट्रस्य मानवर्धनाय सामवेदे प्रार्थ्यते यत् -

आ न इन्द्रो शातग्विनं गवां पोषँ स्वव्ययम् । वहा भगत्तिमूतये ।।



अर्थात् हे परमेश्वर ! राष्ट्ररक्षणार्थमस्माकं कृते शतप्रकारकं बलं प्रददातु । राष्ट्रसंघटनाय राष्ट्रमानप्रतिष्ठापनाय च अस्मान् शतपरिमाणबलयुक्तान् करोत्वित्यर्थ: । स्वीयराष्ट्रस्य एकतायै अखण्डतायै च मातृभूमे: वीरसन्तानानां घनघर्घरसिंहनाद: सामवेदे समुद्घोष्यते । यथा –

आ बुन्दं वृत्रहा ददे जात: पृच्छाद्वि मातरम् ।
क उग्रा: के ह शृण्विरे ।। (तत्रैव पूर्वार्चिकम् - २/२१६)

अर्थात् शास्त्रविद्यानिपुणवीर: स्वहस्ते शस्त्रं गृहीत्वा मातृभूमे: प्रजानां कृते पृच्छति यत् कोऽसौ देशद्रोही अत्र निवसति ? इति । एतादृशप्रयोगद्वारा राष्ट्रप्रेमभावनाया: वार्ता अवश्यं प्रसारिता भवति । यदि राष्ट्रे सुशासनं भवति, तर्हि सूर्यवत् राष्ट्रमपि अटलं तथा सर्वशक्तिसम्पन्नं च भवितुमर्हतीति वेदेऽस्मिन् संसूच्यते । यथा –

यस्य ते नू चिदादिशं न मिनन्ति स्वराज्यम् ।
न देवो नाध्रिगुर्जना ।। (तत्रैव - उत्तरार्चिकम् - ४/१३२)

तदित्थं प्रबन्धविस्तरभयादत्रैव विरम्यते विस्तरात् ।

***

## सहायकग्रन्थसूची

१) वैदिक निबन्ध, वेदाचार्य डा रघुवीर वेदालङ्कार:, न्यू भारतीय बुक् कर्पोरेशन्स, दिल्ली, २००७ ।
२) वैदिक वाङ्मय में राष्ट्रिय एकता एवं अखण्डता, डा अन्नपूर्णा मिश्रा । परिमलपब्लिकेशन्स, दिल्ली, २०११ ।
३) सामवेदीय साहित्य संस्कृति, कला और धर्म-दर्शन , प्रो.ओम् प्रकाश पाण्डेय । नागपब्लिशर्स, दिल्ली, २००५ ।
४) आधुनिक पर्यावरण समस्या - वैदिक समाधान, स्वामी विवेकानन्द सरस्वती । स्वामी समर्पणानन्द वैदिक शोध संस्थान, मेरठ, १९९३ ।

## 8.The SamaVeda Is The *Yoga of Song*.

**Dr. V. Venkatraman Bhatt**
Vidyavachaspathi ,Samaveda Vidwan
Sanskrit Teacher, Kendriya Vidyalaya ,
Hassan, Karnataka – 573201
Phone No 08172 245797 / 9448655061

It consists of various hymns of the Rig Veda put to a different and more musical chant. Hence the text of the Sama Veda is a reduced version of the Rig Veda.

Samaveda's secret is in its musical annotation and rendering. The Sama Veda represents the ecstasy of spiritual knowledge and the power of devotion. The Rig Veda is the word, the Sama Veda is the song. (**ऋच्यध्यूढं साम**)।

The Rig Veda is the knowledge, the *Sama Veda its realization*. Hence the two always go together like husband and wife. The Rig Veda is the wife and the Sama is the husband. (**सामाहमस्मि ऋक् त्वम्**)

The Sama-Veda is the "**Veda of chants**" or "**Knowledge of melodies**". The name of this Veda is from the Sanskrit word saman which means a metrical hymn or song of praise. It consists of 1549 stanzas, taken entirely (except 78) from the Rig-Veda. Some of the Rig-Veda verses are repeated more than once. Three major recensions remain today, the Kauthuma/Ranayaniya and the Jaiminiya. Its purpose was liturgical and practical, to serve as a songbook for the "singer" priests who took part in the liturgy. A priest who sings hymns from the Sama-Veda during a ritual is called an *udgat*, a word derived from the Sanskrit root *ud-gai* ("to sing" or "to chant"). A similar word in English might be "cantor". The styles of



chanting are important to the liturgical use of the verses. The hymns were to be sung according to certain fixed melodies.

Samaveda consists of a selection of poetry mainly from the Rigveda, and some original matter. It has two parts, *Purva-Archika* and *Uttar-Archika*, containing verses addressed to the three gods Agni, Indra and Soma. The verses are not to be chanted anyhow, but to be sung in specifically indicated melodies using the seven svaras or notes. Such songs are called *Samagana* and in this sense Samaveda is really a book of hymns.

Sama Veda was meant for the priests who performed the rituals of the soma ceremonies [rituals of the threefold realm of life & death (samsara)]. As time went on rituals and ceremonies of worship became increasingly complex and so a need arose to compile all the rituals and their chants in a book, as a sort of reference point for the priests. The emphasis was on the specific style of its poetry and its literary content had no relevance. There are also very strict instructions in SamaVeda as to how particular hymns must be sung. Great emphasis was put upon sounds of the words of the mantras so that they could have accomplished effects on the environment and the person who pronounced them.

Samaveda Mantras are single or strung together syllables of energy-based sounds. The Indian metaphysical tradition explains that the body is composed of the combination of five elements and the first of them is sound. Vocal sounds have a profound effect in our lives whether we are consciously aware of them or not, no vocal utterance is entirely without meaning. Using Samaveda mantras such as Gaayatra Gaanam can have a profound effect on the way the mind attains clarity, peace and single minded focus.

One's subconscious mind can easily find its solution through recitation of Samaveda mantras which will dissolve into a state of meditation. A mantra, when repeated constantly during meditation, first loudly and then through silent and mental chanting, takes one into a heightened state of consciousness and awareness.

There are many unique Mantras in the Samaveda Texts.

**BrahmaMantra –**

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः।
सबुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः।।

Lord Brahma is the originator and the generator of the mankind. Brahma represents the universal mind, as creation is the work of the mind and the intellect. Lord Brahma is considered as the "Brahm", the Supreme God.

**SomaMantra-**

सोमं राजानं वरुणमग्निमन्वारभामहे।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्।।

Lord Soma is regarded as the god of Happiness. People pray to Soma asking him for good health for themselves and for others.

**SaraswathiMantra -**

पावका नः सरस्वती वाजेभिर्वाजिनीवती।
यज्ञं वष्टु धियावसुः।।

Sarasvathi is one of the most popular goddesses.. Devi represents strength, morality, power and protection. GoddessSarasvathi is the divine mother, who protects people from evil forces of selfishness, jealousy, hatred, anger and ego.



**BrahmanaspathiMantra-**

आतून इन्द्रक्षुमन्तं चित्रङ्ग्राभं सङ्गृभाय।
महाहस्ती दक्षिणेन।।

Lord Brahmanaspathi is the Lord of beginnings, as per the Samaveda Text. He is the remover of obstacles and also he represents wisdom, intellect and knowledge.

**VishnuMantra -**

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढमस्य पाँ सुले।।

Lord Vishnu is one of the most popular and worshipped deities. Vishnu represents strength, beauty, knowledge.

**ShantiMantras**

The Shanti Mantras are prayers for peace. Shanti Mantras are also known as "Peace Mantras". Shanti Mantras form the part of Vedic Upanishads.

**MantraPower**

Mantras are powerful sounds and when chanted with devotion produce enormous effects and can be meditated on while chanting. As the mind concentrates more and more on the mantra and its meaning, it conditions the mind and takes us to higher states.

***

# 9.अथर्ववेदे साम्नः प्रतिष्ठा

**बलभद्र उपाध्यायः**
सहाचार्यः, अथर्ववेदविभागः
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः,
तिरुपतिः

चतुर्षु वेदेषु सामवेदस्य विशेषता प्रसिद्धमेव । गीतायामपि उक्तं - भगवता श्रीकृष्णेन- वेदानाम् सामवेदोऽस्मि इति । सर्वाः देवता सामगान प्रियाएव । तेषां पूजाविधाने, स्तोत्रपाठादौ सामगानप्रिय इति आयात्येव । यतोऽहि गान रुपात्मकः सामवेदः सङ्गीतशास्त्रस्य जनकः सन् सर्वेषां प्रियकरः वर्तते ।

उक्तं च-"

**शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं बुधैः"** इति ।

ऋग्यजुसाम्नः लक्षणे - "पादेनाऽर्थेन चोपेता वृत्तबद्धमन्त्राः ऋचः" इत्यभिधीयन्ते । वृत्तगीतवर्जितत्वेन प्रश्लिष्टपठिताः मन्त्राः यजूंषि । गीतिरुपाः मन्त्राः सामानि इति च उक्तमस्ति । अथर्ववेदोऽपि ऋगात्मकःइति तेष्वेव अन्तर्भावः । चतुर्णां वेदानां आविर्भाव विषये अथर्ववेदगोपथब्राहाणे बहुरोचक आख्यायिकारूपेण प्रस्तावना वर्तते । तद्यथा पूर्वं ब्रह्मा एकैव आसीत् तस्य रोमगर्तेभ्यः यत् स्वेदः आसीत् । तेभ्यः भृगुः समभवत् । भृगुणा अथर्वा समभवत् अथर्वणा अथववेदः एवं ओंङ्कारश्च समभवत् । तेन च पृथिव्यन्तरिक्ष दिव इति त्रयो लोकाः, अग्निर्वायुरादित्य इति त्रयो देवाः, ऋग्यजुःसाम इति त्रयो वेदाः समभवन् यथा अग्नेर्ऋग्वेदं वायोर्यजुवेदमादित्यात्सामवेदं समभवत । **स तान् स्त्रीन् वेदानभ्यश्राम्यदभ्यतपत समतपत तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः सन्तप्तेभ्यस्तिस्त्रो महाब्याहृतीर्निरमिमत भूर्भुवः स्वरिति भुरित्यृग्वेदात् भुव इति यजुर्वेदात् स्वरिति सामवेदात् ।**

(गो..ब्रा.पू.प्र.1.का.- 6 )



एवं अग्रेऽपि उक्तं यत् ओङ्कारस्य प्रथम - द्वितीय - तृतीय-स्वरमात्रया ऋग्यजुःसामानां व्युत्पत्तिः इति । एवं वकारमन्त्रेण अथर्ववेदस्य व्युत्पतिः अभिवर्णितं अस्ति । सामवेदस्य विषये—तस्य तृतीयया स्वरमात्रया दिवमादित्यं सामवेदं स्वरिति व्याहृतिं जागतं छन्दः सप्तदशं स्तोममुदीचीं दिशं वर्षा ऋतुं ज्योतिरध्यात्मं चक्षुषी दर्शनमितीन्द्रियाण्यन्वभवत् ।

यतोऽहि यज्ञकर्माणि होताध्वर्युउद्गाताब्रह्मणश्च विधिः क्रमशः ऋग्यजुसामाऽथर्वणां कर्तव्यमस्ति । तत्र ब्रह्मस्थानापन्नस्य आथर्वणिकस्य विशेषतः यज्ञरक्षणक्रिया विहितत्वात् भूम्यान्तरिक्ष-दिव्योत्पातादिषु प्रायश्चित्तपरिज्ञानस्य आवश्यकत्वात्, चतुर्णां वेदानां परिज्ञानं अवश्यमेव ।

तदुक्तं निरुक्ते- सर्वे ब्रह्मा इति उक्तं च मन्त्रे-

**"दोषोगाय बृहद्गाय द्युमद्धेहि ।**
**आथर्वण स्तुहि देवं सवितारम्"** ।। इति

सोमयागे प्रकृतिभूते प्रथम प्रयोज्ये अग्निष्टोमे माध्यन्दिनसवने पृष्ठस्तोमेषु रथन्तरसामस्य च विकल्पेन प्रयोगो वर्तते । तदेव मन्त्रे श्रूयते यत्- हे आथर्वाणिक दोषो गाय नाम रात्रिस्तवनं कुरु बृहद् गाय नाम बृहत्साम्नः स्तवनं कुरु स्तुहि देवं सवितारं । नाम सवितारं स्तुहि इति निर्देशितम् ।

त्वामिद्धि हवामहे सा तौ वाजस्य कारवः इति ऋक् एव बृहत् सामनाम्ना प्रसिद्धा । श्रीमद्भगवद्गीतायामपि उक्तम्-भगवता 'बृहत् साम तथा साम्नां गायत्री छन्दसामहम्' इति ।

एवमेव विंशति काण्डे-

**"इन्द्राय सामगायत विप्राय बृहते बृहत् ।**
**धर्मकृते विपश्चिते पनस्यवे"** (सं-20-62-05) इति ।

उद्गातारं ब्रह्मा आदिशति यथा —हे उद्गातारः इन्द्रस्तवनात्मकं सामगानं कुरुत इति । अन्यत्र गोपथब्राह्मणे उत्तरभागे प्र.2 क.6 यज्ञधर्मप्रचरणसमये अध्वर्युः वदति । ब्रह्मन् घर्मेण प्रचरिष्यामः होतर्घर्ममभिष्टुहि उद्गातः सामानि गायेति, प्रचरत धर्ममित्यनुजानाति इति । ब्रह्मणः सामगानविषये, साम्नः सर्ववेदानां सारभूतत्वेन, ऐहिकामुष्मिक फलप्रदातृत्वविषये च सामवेदस्य उत्कर्षत्वं प्रदर्शयन् अत्यन्त रोचक आख्यायिका गोपथब्राह्मण उत्तरभागे (प्र.5क.7) वर्तते ।

अथ सामगायति ब्रह्मा इति साम्नः प्राशस्त्यं बहुधा वर्णितं तद्यथा क्षत्रं वै साम क्षत्रे नैवैनं तदभिषिञ्चति । अथो साम्राज्यं वै साम साम्राज्येवैवेनम् ज्येतत् साम्राज्यं गमयति । अथो सर्वेषां वा एष वेदानां रसः यत् साम, सर्वेषामेव तत् वेदानां रसेनाभिषिञ्चति ।

बृहत्यां गायति बृहत्यां वा असावादित्यः श्रियां प्रतिष्ठायां प्रतिष्ठितस्तपति । ऐन्द्रायां बृहत्याम् गायति ऐन्द्रो वा एष यज्ञक्रतुः, यत् सौत्रामणिः, ऐन्द्रायतन एष एतर्हि योजयते स्व एवैनं तदायतने प्रीणाति । एवं इन्द्रस्य ऐश्वर्यं सूर्यस्यतेजः सामवेदेन प्रतिष्ठितम । अनेनैव अन्न, धन, यशसां प्राप्तिः । यज्ञे चतुर्वारं निधनं भवति । चतस्रो वै दिशः दिक्षु तत् प्रतितिष्ठते अतः चतुष्पादः पशवः । पशु समृद्ध्यै सामगानं भवति ।

एवं प्रकारेण सामस्य ऐहिकामुष्मिकफलसाधनत्वं सुष्ठु अभिवर्णितं अस्ति । ऋचः स्त्रीलिङ्गत्वात् साम्नः पुल्लिङ्गत्वात् द्वयोः मिथुनीभूय प्रजासर्गे प्रकृतिपुरुषभागित्वं अभिवर्णितम् । तदेव गोपथब्राह्मणे उत्तरभागे प्र.3 क.20 आख्यायिकारूपेण अभिवर्णितम् अस्ति । ऋक् च वा इदमग्रे सामवास्तां, सैव नामर्गासीत् ।

अमो नाम साम सा वा ऋक् सामोपावदत मिथुनं सम्भवाव प्रजात्या इति । नेत्यब्रवीत्साम ज्यायान् वा अतो मम महिमेति । ते द्वे



भूत्वोपावदताम् तेन प्रतिवचनं समवदत् । तास्तिस्त्रो भूत्वोपावदन् यत् तिस्त्रो भूत्वोपावदन् तत् तिसृभिर्हि साम सम्मितं भवति ।

तस्मादेकस्य बह्व्यो जाया भवन्ति । न ह्येकस्याः बहवः पतयः । यद्वैतत्सा चामश्च समवदताम् । ततः सामाभवत् तत् साम्नः सामत्वम् । सामं भवति श्रेष्ठतां गच्छति । इति साम्नां प्रतिष्ठां ख्यापयति । अन्यत्र अथर्वसंहितायां चतुर्दशकाण्डे एतदेव प्रस्तावना आयाति यथा अमोऽहमस्मि सा त्वं सामाहमस्मृक् त्वं द्यौरहं पृथिवी त्वम् ताविह सम्भवाव प्रजामा जनयावहै इति -कां. 14 सू.2 मं.71 अत्रापि ऋक्सामयोः हृदयङ्गम सम्भाषणात् प्रतीयते यथा-

साम वदति ऋचा अहं अमः अस्मि त्वं सा असि वयं द्वावपि मिलित्वा सामरूपं धरेम । एवमेव अहं द्यौः अस्मि त्वं पृथिवी असि । वयं मिलित्वा प्रजासर्गं करवाम अत्र प्रकृतिपुरुषयोः मेलनं प्रजासर्गः अतीरमणीयतया वर्णितोSस्ति । सा इति लक्ष्मीवाचकोSपि अम इति मोक्षज्ञानवाचकः एवं धर्मार्थकामद्वारा प्रकृतिं अनुभूय मोक्षधर्मप्रापकत्वम् सामशब्दः बोधयति । एवं अथर्ववाङ्मये बहुत्र साम्नः प्रतिष्ठा प्रसिध्यति । इति शम्।।

***

**चतुर्थः षडज इत्याहुः पञ्चमो धैवतो भवेत् ।**
**षष्ठो निषादो विज्ञेयः सप्तमः पञ्चमः स्मृतः।।**[24]

तत्र सामवेदे अन्यच्च क्रुष्टस्वरः, अतिनीचश्च अतिस्वार्थः स्वरः, अन्ये प्रथमादिमन्त्रान्तः स्वराः उत्तरोत्तरं नीचाः, पूर्वपूर्वमुच्चाश्च भवन्ति। साम्नि यः क्रुष्टस्वरः कथितः तस्योच्चारणं तु प्रथमस्वरसमानमेव परिदृश्यते । प्रथमस्वरात् उच्चतया उच्चारणीयः क्रुष्टस्वरः। स्वराश्च अङ्गुलीभिः तत्तस्वरोच्चारणसमये शिक्षायामुपदिष्टपथेन प्रदर्शनीयाः । यथा चास्ति नारदीयशिक्षायाम् -

**अङ्गुष्ठस्योत्तमे क्रुष्टो ह्यङ्गुष्ठे प्रथमः स्वरः ।**
**प्रदेशिन्यानतु गान्धार ऋषभस्तदनन्तरम्।।**
**अनमिकायां षडजस्तु कनिष्ठायान्तु धैवतम् ।**
**तस्याधस्ताच्च यौऽन्यस्तु निषादं तत्र निर्दिशेत् ।।**

अन्तिमे च इदं वक्तुं शक्यते – सामवेदे त्रयः स्वराः आसन् । ये च क्रुष्टः (उदात्तसमकक्षः), मन्द्रः (अनुदात्तसमकक्ष), अतिस्वार्थः (स्वरितसमकक्षः) । कालान्तरे क्रुष्टमध्यमयोः मध्ये अवरोहीक्रमेण चत्वारः स्वराः आयान्ति ।ते प्रथमः, द्वितीयः, तृतीयः, चतुर्थश्चेति ।

प्रयुक्तानां ग्रन्थानां सूची -


1.शतपथब्राह्मणम्. 14.4.14
2.ऐतरेयब्राह्मणम् . 3.23
3. निरुक्तम् . 7.3.6.4
4.सामविधानब्राह्मणम् . 1.1.13
5.ऐतरेयब्राह्मणम्. 8.27
6.ऐतरेयब्राह्मणम्. 8.27
7.भगवद्गीता. 10.22
8.पश्पशाह्निक. पृ.10





9.शतपथब्राह्मणम्. 10.5.1.42
10.पूर्वमीमांसा. 2.1.36
11.बृहदारण्यकोपनिषद्. 1.3.22
12.अतोऽन्यत् सवरितं स्वारं जात्यामाचक्षते पदे ।ऋ.प्रा. 3.8
13.सर्वानुक्रमणी (वेदार्थदीपिका) पृ. 58
14.ऋग्वेदानुक्रमणी. 1.8.12
15.अधि स्वरे..।ऋक्संहिता. 8.72.7
16.विकृतकरणाः स्वराः।पा.शि.सू. 3.8
17.अकाराद्या सर्वा ज्ञेया औकाराद्याश्चतुर्दश ।ना.शा. 14.8
18.एते स्वराः ।ऋक्प्रातिशाख्य. 1.3
19.प्राणः स्वरः।ताण्ड्यब्राह्मणम् . 7.1.10
20.एषो ह वै सूर्यो भूत्वाऽमुस्मिंल्लोके स्वरति । तद्यत् स्वरति तस्मात् स्वरः।त्स्वरस्य स्वरत्वम्।गोपथब्राह्मणम् . पूर्वभागः . 5.14
21.याज्ञवल्क्यस्मृतिः 3.112
22.सामविधानब्राह्मणम् . 1.1.14
23.बृहद्देवता . 8.116-121
24.नारदशिक्षा . 1.5.12


***

# 16. सामवेदीयलक्षणग्रन्थाः – एकं परिशीलनम्

जे.यस्.वि.यन्.चन्द्रशेखरशर्मा
अतिथि अध्यापकः, पूर्वमीमांसाविभागः
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपतिः

## मङ्गलाचरणम्

वागीशाद्यास्सुमनसस्सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम्।।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः
नीलोत्पलदलाभासः सामवेदो हयाननः।
अक्षमालान्वितो दक्षे वामे कम्बुधरस्स्मृतः।।

## उपोद्घातः

**वेदोऽखिलो धर्ममूलम्**[1] इति वेदानां धर्ममूलत्वं प्रसिद्धम्। स च वेदः भारतीयानां निधिः। अत एव भारतीयानां वेदस्य च नितान्तं सम्बन्धः दृश्यते। अतः कर्मानुष्ठानद्वारा लोककल्याणाय तदनुष्ठातुश्च चित्तसंस्कारद्वारा आत्यन्तिकसुखाय च परमेश्वरात् निश्वासरूपेण आविर्भूता वेदा विराजन्ते।[2] अर्थात् अतीवप्रचीनतमः कल्पादितः गुरुपरम्परया अनुवर्तमानः मन्त्रसमुदायः। स च वेदः महर्षिणा वेदव्यासेन वेदविभागकाले चतुर्धा विभक्तः। ततश्च शाखोपशाखारूपेण।

## सामवेदप्राशस्त्यम्

चतुर्षु वेदेषु सामवेदः प्रमुखं स्थानं वहति । "सामानि यो वेत्ति स वेदतत्त्वम्" इति वचनात् ज्ञायते यत् सामवेदः सर्ववेदप्रधानः इति। गीतायां स्वयं भगवान् श्रीकृष्णः उक्तवान् यत् "वेदानां सामवेदोऽस्मि"[3] इति । यः जागरणशीलः पुरुषः स एव सामगानं कर्त्तुं समर्थः भवति । यथोक्तं - "यो जागार तम् ऋचः कामयन्ते, यो जागार तमु सामानि यन्ति"[4] इति ।



## सामवेदशाखाविशेषाः

एवं प्रथितमहिमा सामवेदः सहस्त्रशाखात्मकः, तदेवोक्तम् भगवान् पतञ्जलिः स्वीये महाभाष्ये "सहस्त्रवर्त्मा सामवेदः"[5] इति। सामवेदस्य आद्याचार्यः जैमिनिः इति कथ्यते। तदनन्तरं तत्पुत्राः शिष्याश्च सामाध्ययनं कृत्वा सामशाखानां विस्तारं कृतवन्तः । तेषु कतिपयानां नामानि दीयन्ते । यथा - सुमन्तु - सुन्वान्-सुनु-हिरण्यनाभ - पौषञ्जि - कार्त्ता - लौगाक्षि - माङ्गलिकुल्य - कुसीद - कुक्षीप्रमुखाः। प्रपञ्चहृदय-दिव्यावदान-चरणव्यूह-जैमिनिगृह्यसूत्रादीनांपर्यालोचनया ज्ञायते यत् एतद्ग्रन्थप्रणनयकाले सामवेदस्य त्रयोदशशाखाः लभ्यन्ते इति। सम्प्रति शाखात्रयमेव समुपलभ्यते । ताश्च - 1. कौथुमीयशाखा 2.राणायनीयशाखा 3. जैमिनियशाखा इति।

वेदशाखानां रक्षणाय प्राचीनैः तपोधनैः महर्षभिः वेदाङ्गानि, नैकशास्त्राणि, शिक्षाप्रातिशाख्यादिलक्षणग्रन्थाश्च आरचिताः। वेदानामध्ययने अर्थावबोधने च केषाञ्चन आर्षेयग्रन्थानाम् अध्ययनस्य महती आवश्यकता वर्तते। तत्र वैदिकव्याकरणं शिक्षाप्रातिशाख्यादि-लक्षणग्रन्थाः प्रमुखाः।

## लक्षणग्रन्थानां वैशिष्ट्यम्

सम्प्रति सामवेदीयलक्षणग्रन्थानां प्रशस्तिमुद्दिश्य चिन्त्यते।

वर्तमानकाले वेदसंरक्षणाय शिक्षाप्रातिशाख्यादिलक्षण-ग्रन्थानाम् अध्ययनम् अत्यन्तमनिवार्यम्। यत्र मन्त्रानाश्रित्योच्चारण-प्रक्रिया निरूप्यते स एव लक्षणग्रन्थः इति। लक्षणग्रन्थाध्ययनेन वैदिकमन्त्राणां यथाविध्युच्चारणं सुलभतरं भवति। स्वरवर्णमात्रा-कालाद्यवगमनाय, सुस्वरेणसम्यगुच्चारणाय, उच्चनीचादिविवेचनाय, अक्षराणां सन्धिलोपागमविकारविवेचनायच अत्यन्तोपकारकाः भवन्ति एते लक्षणग्रन्थाः। लक्षणज्ञानरहितं वेदाध्ययनं निष्फलमिति च निरूपितं भगवता वेदव्यासेन।

उक्तञ्चव्यासशिक्षायाम् -

**लक्षणेन विनाध्ययनं यः पठेदपि सर्वदा।**
**नैव तत्फलमाप्नेति सविप्रस्सुजनोऽपि हि।**[6] इति

तथैवोक्तम् आरण्यकशिक्षायाम् -

**लक्षणेन विना विद्या निर्मलापि न शोभते।**
**अप्राणस्येव देहस्य भूषणैरप्यलङ्कृतिः।।**[7] इति

## सामवेदीयलक्षणग्रन्थाः

सामवेदमन्त्राणां साम्नां च लक्षणनिरूपणार्थं बहवो ग्रन्थाः प्रणीताः। तेषु नारदीयशिक्षा, गौतमीयशिक्षा, लोमशीयशिक्षा इत्यादिशिक्षाग्रन्थाः प्रमुखाः। एवमेव ऋक्तन्त्रम्, समातन्त्रम्, अक्षरतन्त्रम्, पुष्पसूत्रम् इत्यादयः प्रातिशाख्यग्रन्थाः, तथा गायत्र-विधानम्, लघु ऋक्तन्त्रसंग्रहः, ऋक्तन्त्रविवृतिः, सामतन्त्रप्रकाशिका, सामतन्त्रसंग्रहः, आर्षेयदीपिका, मात्रालक्षणम्, आर्चिकलक्षणम्, आर्चिकछलाक्षरम्, इत्यादयो लक्षणग्रन्थाः सुप्रसिद्धाः। सम्प्रति एतेषां गन्थानां परिचयात्मकं विवरणं किञ्चिदत्र विव्रियते।

## नारदीयशिक्षा

ग्रन्थस्यास्य कर्ता भवति नारदः। नारदेन प्रणीतत्वात् अस्य ग्रन्थस्य नरदीयशिक्षा इति कथ्यते। प्रपाठकद्धयेन षोडशखण्डात्मकः। ग्रन्थेऽस्मिन् षोडशेषु खण्डेषु बहवो विषयाः निरूपिताः। तेषु आर्चिकसामिकगाथिकभेदेन स्वराणां त्रैविध्यम्, चतुर्दश गानदोषाः – तेषां लक्षणानि, हस्तसन्निवेशप्रकारः, अङ्गुल्या स्वर निर्देशः, क्रुष्टादिस्वराणां मूर्धादिस्थानादुत्पत्तिः, सप्तविधस्वरितनिरूपणम्, कम्पविधिः, विद्यादाने अपात्रनिरूपणम् इत्यादयः प्रसिद्धाः। ग्रन्थस्यास्य अध्ययनेन ब्रह्मलोकप्राप्तिः इत्यन्ते निरुप्य ग्रन्थसमाप्तिः कृतः।



यथा –

"एवं वर्णाः प्रयोक्तव्याः नाव्यक्ता न च पीडिताः।
सम्यक् वर्णप्रयोगेण ब्रह्मलोके महीयते।[8] इति

अयं ग्रन्थः भट्टशोभाकरकृतव्याख्यया, श्रीनारायणस्वामि-दीक्षितेन विरचिता प्रकाशाख्यटिप्पण्या विराजते।

## गौतमीयशिक्षा

गौतममहर्षिणा रचितोऽयं ग्रन्थः। ग्रन्थस्यास्य संयोगश्रृङ्खला इति नामान्तरमप्यस्ति। ग्रन्थेऽस्मिन् षोडशखण्डाः सन्ति। ग्रन्थादौ त्रयस्त्रिंशत् (33) व्यञ्जनभेदाः निरूपिताः यथा – पञ्चविंशतिस्पर्शाः (25), चत्वारः अन्तस्थाः (4), चत्वारः ऊष्मवर्णाः (4) आहत्य त्रयस्त्रिंशत्। इत्यादयो बहवो विषयाः ग्रन्थेऽस्मिन् उपनिबद्धाः।

## लोमशीयशिक्षा

"लोमशीयशिक्षां प्रवक्ष्यामि गर्गाचार्येण चिन्तिताम्"[9] इति शिक्षावचनात् ज्ञायते यत् ग्रन्थास्यास्य कर्ता गार्गाचार्यः इति। अष्टखण्डात्मिकोऽयं ग्रन्थः। ग्रन्थेऽस्मिन् स्वरविशेषाः, तेषां उच्चारणप्रकाराः, द्विविधरङ्गः, अनुनासिकोच्चारणप्रकारः, अक्षराणां द्विर्भावः, अणुमात्रादीनां स्थाननिर्देशः, इत्यादयो बहवो विषयाः आचार्येण निरूपिताः।

## ऋक्तन्त्रम्

ग्रन्थस्यास्य कर्ता शाकटायनः। ग्रन्थोऽयं पञ्चप्रपाठकात्मकः, द्वात्रिंशत्खण्डात्मकः। ग्रन्थेऽस्मिन् 286 सूत्रैः अक्षरपरिज्ञानम्, संज्ञाप्रकरणम्, व्यञ्जनानां पूर्वाङ्ग-पराङ्गविवेचनम्, अक्षराणां स्वरमात्राकालादि-निर्णयः, सकारागमः, प्रकृतिभावः, लोपाभावः, द्विर्भावः, प्रश्लेषविश्लेषाभावः, रेफापत्तिः इत्यादयो बहवो विषयाः सुष्टु निरूपिताः। अयं ग्रन्थः आर्चिकस्य प्रधानप्रातिशाख्यमिति कथ्यते।

**सामतन्त्रम्**

ग्रन्थस्यास्य प्रणेता औदव्रजिः। त्रयोदशप्रपाठकात्मक-सामतन्त्राख्यः ग्रन्थः प्रकृतिगान-आरण्यगानयोः प्रधानभूतः। अस्मिन् ग्रन्थे उच्चनीचभावः, गतागतभावः, अंभावः, सङ्कर्षविकर्षभावः, अतिहारभावः, मिन्भावः, यथर्चभावः, नुभावः इत्यादयः प्रायशः त्रिंशद्भावाः एवं बहुविधगानविशेषाः सम्यक्प्रतिपादितः।

**अक्षरतन्त्रम्**

अस्यग्रन्थस्य प्रणेता आपिशलमुनिः। प्रपाठकद्वयेन षड्विंशतिखण्डात्मकः अयं ग्रन्थः। वस्तुतः पञ्चदशप्रपाठकात्मकस्य सामतन्त्राख्यग्रन्थस्य अन्तिम प्रपाठकद्वयं अक्षरतन्त्रमिति कथ्यते।स्तोभानां प्रयेगपरिज्ञानाय पुस्तकमिदम् अत्यन्तमनिवार्यम्।

**पुष्पसूत्रम्**

भगवता वररुचिना आरचितोऽयं पुष्पसूत्राख्यः लक्षणग्रन्थः। दशप्रपाठकात्मकोऽयं ग्रन्थः। श्रौतयागेषु ग्रन्थस्यास्य भूयान् उपयोगः दृश्यते।

तथाचोक्तम् – अयज्ञो वा एष योऽसामा इति।
ग्रन्थेऽस्मिन् प्राधान्येन अष्टादशभावाः निरूपिताः।
यथा -

आइत्वं प्रकृतित्वञ्च वृद्धं चावृद्धमेव च।
गतागताच स्तोभानां उच्चनीचं तथैवच।।
सन्धिवत्पदवद्गानं अत्वमार्भावमेवच।
प्रश्लेषश्चाथविश्लेषा ऊहेत्वेवं निबोधत।।
संकृष्टञ्च विकृष्टञ्च व्यञ्जनं लुप्तमतिहृतम्।
आभावाश्च विकाराश्च भावा अष्टादशस्मृताः।।[10] इति

1. आयिभावः, 2. प्रकृतिभावः, 3. वृद्धभावः 4. अवृद्धभावः 5. स्तोभगतागतभावः, 6. उच्चनीचभावः, 7. सन्धिवद्गानभावः 8. पदवद्गानभावः, 9. अत्वम् , 10. आर्भावः, 11. प्रश्लेषभावः 12. विश्लेषभावः, 13. सङ्कृष्ट (सङ्कर्ष)भावः, 14.विकृष्ट(विकर्ष) भावः 15. लोपभावः, 16. अतिहारभावः, 17. आभावः, 18. विकारभावः



**उपसंहारः**

एतादृशरीत्या सामवेदे बहवः लक्षणग्रन्थाः सन्ति किन्तु अध्ययनसम्प्रदाये नारदीयशिक्षा, ऋक्तन्त्रम्, सामतन्त्रम्, पुष्पसूत्रमित्यादि केचन ग्रन्थाः एव सन्ति। एवंञ्च अवसरेऽस्मिन् सामवेदीयलक्षणग्रन्थानां परिचयं यथामति प्रदाय विरमामि।

**अन्त्यटिप्पणी**

1. मनुस्मृति – 2/6
2.अस्यमहतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोथर्वाङ्गिरसः।
3. भगवद्गीता – 10/22
4. ऋग्वेदः – 4-2-25-4
5. महाभाष्यम्, पस्पशाह्निकम्
6. व्यासशिक्षा – 28/35,36
7. आरण्यकशिक्षा – श्लो.सं – 262
8. नारदीयशिक्षा
9. लोमशीयशिक्षा
10. पुष्पसूत्रम्

***

## 17. इष्टियागेषु सामस्वरूपम्

डा.ओङ्कार यशवन्त सेलूकरः
अतिथि-अध्यापकः.
वेदभाष्यविभागः
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः,तिरुपतिः

चत्वारि शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां२॥ऽआविवेश॥[1]

इत्यस्मिन् मन्त्रे निर्दिष्टं यज्ञपुरुषस्वरूपं वयं सर्वे जानिमः। सोऽयं यज्ञपुरुषः वेदाश्रित एव। वेदानां त्रित्वात् त्रयोऽस्यपादा इति वचनं श्रुतिः निगदति। अस्य पुरुषस्य त्रयोपादाः ऋग्यजुःसामेति वेदत्रयरुपेण अवस्थिताः। यथा पादं विना अस्माकं कुत्रापि गतिः नास्ति तथैव वेदं विना यज्ञपुरुषस्यापि गतिः अशक्येति श्रुतेः भावः। तेषु वेदेषु सन्ति सामवेदस्य महत्वं वर्ततेतराम्। यतो हि प्रायः यज्ञाः सामाश्रिताः सन्ति इति वचनमपि सामविषये श्रूयते। "यज्ञो वै विष्णुः" [2] स यज्ञात्मको विष्णुः स्वयं भगवद्गीतायां सामवेदस्य माहात्म्यं 'वेदानां सामवेदोऽस्मि'[3] इत्यनेन वचनेनोक्तवन्तः।

महर्षि याज्ञवल्क्यः शतपथे 'न असामा यज्ञोऽस्ति'[4] इत्यनेन वचनेन सामस्य वैशिष्ठ्यं प्रतिपादितवन्। अत्र विचारणीयो विषयोऽस्ति यत् श्रुतिः स्वयं न असामा यज्ञोऽस्ति इति वचनेन सामवेदस्य यज्ञे अनिवार्यत्वं श्रावयति। यज्ञेष्वपि सामवेदस्य प्राधान्यं नैकेषु सोमयागेषु अस्माभिः अनुभवितुं शक्यते। तथा च सोमसंस्थायाः नामान्यपि तस्य यागस्यावसाने पठ्यमानेन स्तोत्रनाम्ना एव भवतीत्यस्य सामवेदस्य वैशिष्ठ्यम्। सामवेदस्य इयं भूमिका सोमयागेषु स्पष्टतया दृष्टुं शक्नुमः। किन्तु श्रौतप्रतिपादितेषु यागेषु सोमयागेभ्यः अतिरिक्तानां इष्टि-चातुर्मास्यादीनां हविर्यज्ञानामपि उल्लेखोऽस्ति। तत्र हविःसंस्थायां प्रकृतिभुते दर्श-पूर्णमासयागे कुत्रापि सामवेदस्य भूमिका न दरीदृष्यते। अत एव सामवेदसम्बन्धी उद्गाता



नामक ऋत्विगपि अत्र आर्विज्यं न करोति। यथा प्रकृतिभूते यागेऽस्मिन् सामवेदीयस्य उद्गातुः भूमिका नास्ति तथैव अस्य विकृतिभूतेषु चातुर्मास्यादिष्वपि साम्नः भूमिका न श्रूयते। गवेषणीयोऽयं विषयः यत् श्रुतिरपि 'नासामा यज्ञोऽस्ति'[5] इति वाक्येन सामं विना यज्ञस्य कल्पना न स्वीकरोति। तर्हि इष्टादौ यज्ञत्वं साधनाय सामवेदस्य अन्तर्भावः अनिवार्य एव। किन्तु हविःसंस्थासु सामवेदस्य अदर्शनात् कथं यज्ञत्व व्यवहारः करणीयः इति।

अस्या जिज्ञासायाः परिहारः महर्षिणा याज्ञवल्क्येन शतपथब्राह्मणे सामिधेन्यनुवाकस्य स्वरुपप्रतिपादनावसरे कृतः। आहवनीयाग्नेः समिन्धनाय अनुष्ठीयमानोऽयं सामिधेन्यनुवाक-पाठविधिः। प्रयोगेऽस्मिन् अध्वर्युः पञ्चदशात्मकेन इध्मकाष्ठेन आहवनीयाग्निं संदीपयति। अध्वर्युना सह होता अपि 'प्रवोवाजा'[6] इत्यादिभिः ऋग्भिः अग्निं समिन्धे। अत एव सामिन्धनसाधनत्वादेव तासामपि ऋचां सामिधेन्यः इति नाम सम्पन्नम्।

तात्पर्यतः इध्मेन सामिधेनीभिः च अग्निं समिन्धनकार्यं विधास्यते। एतासां सामिधेनीनां ऋचां पाठसमये सन्ति केचन नियमाः। यथा प्रथमोत्तमयोः ऋचोः त्रिरुच्चारणं विहितम्। एतत् त्रिरुच्चारणं अनुच्छवसन्निव अनुब्रूयात् अर्थात् ऋचान्ते अवसानं न कर्तव्यमिति। अवसानं कर्तुमिच्छति चेद् ऋङ्मध्ये कूर्यात् न त्वन्ते। प्रति ऋगन्ते प्रणवोच्चरणेन सह अपरा ऋगारम्भणीया इत्यादयः सन्ति केचन नियमाः। तेषु नियमेषु नियमद्वयमेव अत्र पत्रस्थविषयावबोधनाय ध्यातव्यमस्ति। तत्र प्रथम नियमः यत् सामिधेनीनां पठनात् प्राग् होता प्रथमं हिम् कृत्वा अनन्तरं ऋचां पठति।

द्वितीयोऽस्ति यत् प्रति ऋगादौ ओ३म् इत्यस्य उच्चारणम्।[7] अनयोः हिङ्कारप्रणवयोः उच्चारणस्य उपपत्तिप्रदानावसरे महर्षि याज्ञवल्क्यः इष्ट्यादियागेषु सामं विना यज्ञत्वव्यवहारः कथं करणीयः इत्यस्य निराकरणं कृतवन्तः। तेषां मतानुसारेण सामिधेनीनां ऋचां

पठनात् प्राग्होत्रा पठ्यमानेन हिङ्कारेण इष्टावपि सामस्वरुपं अङ्गीकर्तव्यमिति। यतो हि हिङ्कारेणैव सर्वेषां साम्नां गाणं विधास्यते। अर्थात् सामिधेनीषु पठ्यमानः हिङ्कारः सामस्वरूप एव। अस्य हिङ्कारस्य सामरूपत्वं याज्ञवल्क्यः 'न अहिङ्कृत्वा साम गीयते'[8] इत्यनेन वचनेन कथयन्ति। न केवलं हिङ्कारः अपितु प्रणवोच्चारणेनापि अत्र सामत्वं अङ्गीक्रियते। तात्पर्यतः ध्यातव्यमस्ति यत् हिङ्कारप्रणवयोः साम्नः अवयवात् सामिधेनीषु मन्त्रेषु अनयोरुच्चारणेन सर्वेऽपि सामिधेनीयुक्ताः यज्ञाः (हविर्यज्ञा अपि) ससामा सम्पद्यन्ते। एवं इष्ट्यादिषु हविःसंस्थासु यागेषु सामस्वरूपमदर्शनात् तथा च सामरहितस्य यज्ञस्य अयज्ञत्वात् तेषु यागेषु अयज्ञत्वमापद्यते इति यत् पूर्वं कल्पितमासीत् तस्य अत्र परिहारो जातः।

उक्तं यथा वाजश्रुतौ-

नासामा यज्ञोऽस्तीति वा आहुः। न वा अहिंकृत्य साम गीयते, स यद् हिङ्करोति तद् हिङ्कारस्य रूपं क्रियते। प्रणवेनैव साम्नः रुपमुपगच्छति। ओ३म् ओ३म् इति, एतेनो हास्यैष (दर्श-पूर्णमासयागः) ससामा यज्ञो भवति[9] इति।

हिङ्कारस्य सामरूपत्वं साधनाय अन्या एका युक्तिः प्रसङ्गवशात् ब्राह्मणे निर्दिष्टा अस्ति। सामवेदस्य प्राणरूपत्वं श्रुतावनेकत्र साधितमस्ति।[10] स प्राणः नासिकया शरीरे प्रविशति। अतः नासिकाऽस्ति अस्य इन्द्रियम्। तथा च सामरूपोऽयं हिङ्कारोऽपि नासिकयैव उच्चारयितुं पारयामः। अर्थात् अपिगृह्य नासिके न हुङ्कर्तुं शक्नुमः। उक्तं यथा-

यद्धेव हिङ्करोति, प्राणो वै हिङ्कारः, तस्मात् अपिगृह्य नासिके न हिङ्कर्तुं शक्नोति[11] इति।

प्रसङ्गवशात् अत्र एतदपि ध्यातव्यमस्ति यत् अस्य सामस्वरुपहिङ्कारस्य सामिधेन्यनुवाके एव अन्तर्भावस्य किं प्रयोजनमिति। अस्यापि हेतुः वाजश्रुतौ प्रतिपादितः तद्यथा- 'प्राणो वै हिङ्कारः' स च प्राणः वृषास्वरुपः। सामिधेन्यः ऋचः वागात्मिकाः सन्ति। प्राणश्च वाक् च स्त्रीपुंस्त्वरुपत्वात् अनयोः सहोच्चरणेन सामिधेनीनां पुरस्तादेव यजमानस्य पुत्रपौत्रादिजनननिमित्तं यागफलनिमित्तं वा मिथुनमेव साधयन्ति। उक्तं यथा-



'प्राणो वै हिङ्कारः,.......वाचा वा ऋचमन्वाह, वाक् च वै प्राणश्च मिथुनम्, तदेतपुरस्तान्मिथुनं प्रजननं क्रियते सामिधेनीनाम्[12] इति।

**निष्कर्षः**

अनेन प्रकारेण शतपथब्राह्मणे हविःसंस्थासु प्रदिपादितेषु यागेषु सामिधेनीमन्त्रपाठसमये उच्चार्यमाणयोः हिङ्कारप्रणवयोः सामरुपत्वेन अङ्गीकृत्य सामिधेन्यनुवादयुक्ताः सर्वेऽपि यज्ञाः ससामाः सन्तीति उक्त्वा इष्टियागेष्वपि ऋग्यजुःसामात्मस्य यज्ञपुरुषस्य यथावत् स्वरूपं निर्दिष्टमस्ति। येन इष्टियागेषु असामत्वात् अयज्ञीयत्वस्य परिहरो जातः। एतैः शब्दैः इष्टियागानां ससामत्वविषये यथाग्रन्थं विचार्य विरमामि।

**टिप्पणीः-**

1.शु.य.सं १७/९१
2.शत. ब्राह्म. १/१/२/१३
3.भगवद्गीता १०/२२
4.शत. ब्राह्म. १/४/१/१
5.शत. ब्राह्म. १/४/१/१
6.तत्रैव
7.तत्रैव
8.शत. ब्राह्म. १/४/१/१
9.शत. ब्राह्म. १/४/१/१
10. 'ऋचं वाचं प्रपद्ये, मनो यजुः, सामः प्राणान्' इति। वा.सं.३६/१
11.शत. ब्राह्म. १/४/१/२
12.शत. ब्राह्म. १/४/१/२

***

## 18. सामवेदार्थपरिज्ञाने व्याकरणस्य उपादेयता

**Dr. K.Venkata Hanumat Sarma,**
Asst. Professor,
Dept.of Nirukta,
S.V.Vedic University, Tirupati

परमेश्वरनिश्वासिताः वेदाः अत एव अपौरुषेयाः नित्यसत्याश्च इति दृढविश्वसः भारतीयानाम्। अतएव ते परमप्रमाणत्वेन अनुसरन्ति वेदोक्तधर्मान् उपायानपि। तादृशवेदानां शब्दतः अर्थतश्च संरक्षणार्थं महाप्रभावाः ऋषयः, राजसदनस्य दुर्गणीव षडङ्गानि निरमासुः।

तानि च -1. शिक्षा, 2. व्याकरणम्, 3. छन्दः, 4. निरुक्तम्, 5. ज्यौतिषम्, 6. कल्पः इति।

एते षट्सु वेदाङ्गेषु व्याकरणं मुख्यमिति ज्ञापयति श्रीमहाविष्णोः अवतारमूर्तिः भगवान् पतञ्जलिः स्वीयमहाभाष्ये। तद्यथा - 'षट्स्वङ्गेषु प्रधानं व्याकरणम्। प्रधाने कृतो यत्नः फलवान् भवति' इति। पाणिनीयशिक्षायामुच्यते -"मुखं व्याकरणं स्मृतम्' इति।

अतः अवसरेस्मिन् सामवेदार्थपरिज्ञाने वेदाङ्ग व्याकरणस्य उपयोगः केचन प्रस्तूयन्ते -

**वर्तमाने अर्थे भूतकाल प्रयोगः यथा -**

लौकिकसंस्कृतभाषायां लुङ्, लङ्, लिट् लकाराः भूतकाले अर्थे प्रयुज्यन्ते। किन्तु सामवेदे वर्तमानार्थेपि प्रयुज्यते। सामवेदे प्रत्यक्षभूतार्थेपि। उदाहरणार्थं अत्र साममन्त्राः प्रदर्श्यन्ते।

य आन यत् परावतः सुनीती तुर्वशं यदुम्।
इन्द्रः स नो युवा सखा॥ [1]
अपिबत् कद्रुवः सुतमिन्द्रः सहस्रबाह्वे।
तत्रावदिष्ठ पौंस्यम्॥ [2]



इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः।
जघान नवतीर्नव॥ [3]
अपां फेने न नमुचेः शिर इन्द्रो दवर्तयः।
विश्वा यदजय स्पृधः॥ [4]

**लेट् लकारप्रयोगः-**

लोके - लट्, लोट, लेट्, लङ्, विधिलिङ्, लिट्, लुट्, लृट्, आशीर्लिङ्, लृङ् इत्येते लकाराः प्रयुज्यन्ते। किन्तु वेदे कश्चन लेट् लकारः श्रूयते। प्रायः लिङ् लकारार्थे अस्य प्रयोगः भवति। अथवा उपसंवादार्थे अनुमानार्थे वा प्रयुज्यते तथाहि - यज -धातोः परस्मैपद - आत्मनेपद प्रयोगेषु परिशीलयामः ।

परस्मैपदम् प्रथमपुरुष -एकवचनम् -

यजति, यजाति, यजिषति, यजिषाति, याजिषत्, यजत्, यजात्, यजिषत्, यजिषात्, याजिषत्, याजिषात् इत्येतानि रूपाणि।

द्विवचनम् - यजतः, यजातः, यजिषतः, यजिषात्, याजिषतः, याजिषात् इत्येतानि रूपाणि।

बहुवचनम् - यजन्ति, यजान्ति, यजिषान्ति, यजिषन्ति, याजिषान्ति, याजिषान्ति, यजन्, यजान्, यजिषन्, यजिषान्, याजिषन्, याजिषान् इत्येतानि रूपाणि।

परस्मैपद मध्यमपुरुषम् - एकवचनम्-यजति, यजासि, यजिषसि, यजिषासि, याजिषसि, याजिषासि, यजः, यजाः, यजिषः, यजिषाः, याजिषः, याजिषाः याजिषान् इत्येतानि रूपाणि।

द्विवचनम् -यजथः, यजाथः, यजिषथः, यजषाथः, याजिषथः, याजिषाथः याजिषान् इत्येतानि रूपाणि।

बहुवचनम्- यजथ, यजाथ, यजिषथ, यजिषाथ, याजिषथ, याजिषाथ याजिषान् इत्येतानि रूपाणि।

परस्मैपद उत्तमपुरुषम् -एकवचनम्- यजामि, यजिषामि, याजिषामि याजिषान् इत्येतानि रूपाणि।

द्विवचनम् - यजावः, यजाव, यजिषावः, यजिषाव, याजिषावः, याजिषाव याजिषान् इत्येतानि रूपाणि।

बहुवचनम् - यजामः, यजाम, यजिषामः, यजिषाम, याजिषामः, याजिषाम याजिषान् इत्येतानि रूपाणि।

आत्मनेपदम् प्रधमपुरुषम् - एकवचनम् - यजते, यजाते, यजिषते, यजिषाते, याजिषते, याजिते, यजतै, यजातै, यजिषतै, यजिषातै, याजिषतै, याजिषातै याजिषान् इत्येतानि रूपाणि।

द्विवचनम् - यजैते, यजिषैते, याजिषैते याजिषान् इत्येतानि रूपाणि।

बहुवचनम् - यजन्ते, यजान्ते, यजिषन्ते, यजिषान्ते, याजिषन्ते, याजिषान्ते, यजन्तै, यजान्तै, यजिषन्तै, यजिषानेतै, याजिषन्तै, याजिषान्तै याजिषान् इत्येतानि रूपाणि।

आत्मनेपदम् मध्यमपुरुषम् -एकवचनम् - यजसे, यजासे, यजिषसे, यजिषासे, याजिषसे, याजिषासे, यजसै, यजासै, यजिषसै, यजिषासै, याजिषसै, याजिषासै याजिषान् इत्येतानि रूपाणि।

द्विवचनम् - यजैथे, यजिषैथे, याजिषैथे याजिषान् इत्येतानि रूपाणि।

बहुवचनम् - यजध्वे, यजाध्वे, यजिषध्वे, यजिषाध्वे, याजिषध्वे, याजिषाध्वे, यजध्वै, यजाध्वै, यजिषध्वै, यजिषाध्वै, याजिषध्वै, याजिषाध्वै याजिषान् इत्येतानि रूपाणि।

आत्मनेपदम् उत्तमपुरुषम् -एकवचनम् - यजि, यजै, यजिषे, यजिषै, याजिषे, याजिषै याजिषान् इत्येतानि रूपाणि।

द्विवचनम् - यजावहे, यजावहै, यजिषावहे, यजिषावहै, याजिषावहे, याजिषावहै याजिषान् इत्येतानि रूपाणि।

बहुवचनम् - यजामहे, यजामहै, यजिषामहे, यजिषामहै, याजिषामहे, याजिषामहै। इति।



अत्र सामवेदे पठित लेट् लकार प्रयोगाः केचन उदाह्रियन्ते स्पष्टार्थम् - स्तुषे[5], वर्धासे[6], यंसत्[7], दाशत्[8], मृड्यसि[9], याचिषत्[10], असः[11], जयासि[12], जीवात्[13], तारिषत्[14], भ्यसात्[15], पिबाति[16], स्तवाम◌े, अविषत्[18], तिष्ठाति[19], स्पृषत्[20], तरत्[21] इति।

दीर्घभावः - लौकिकव्याकरणरीत्या लिट् लकारे यदा अभ्यासः भवति तस्य अभ्यासगत प्रथमाक्षरस्य दीर्घभावः सामवेदे दृश्यते। तद्यथा-

लोके रूपाणि - ववृते, ववृधानम्, ववृधे, दधार। एतेषां स्थाने वेदे अभ्यासदीर्घः दृश्यते। वेदे रूपाणि - वावृते[22], वावृधानम्[23], वावृधे[24], दाधार[25]।

एवं परिशीलनेन सामवेदार्थपरिज्ञाने वैदिक व्याकरणस्य महती आवश्यकता अस्ति इति ज्ञायते।।

**पादटिप्पणी -**

1.साम.127 2.साम.131 3.साम.179
4.साम.2115.साम. 5,87,178,400 6.सा, रि
7.साम.22 8.साम.58 9.साम.173
10.साम.308 11.साम.314 12.साम.324
13.साम.341 14.साम.358 15.साम.371
16.साम.386 17.साम.387 18.साम.411
19.साम.424 20.साम.441 21.साम.500
22.साम.372, 423 23.साम.374
24.साम.529 25.साम.1845

***

# 19. महाव्रतीय सामवैशिष्ट्यम्

**सुदर्शन कुलकर्णी**
अतिथि-अध्यापकः,
सामवेदविभागः
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपति

वैदिकवाङ्मये सामवेदस्य महत्वं सदैव सर्वैः स्वीक्रियते । अस्य गानशैली सर्वेभ्यः रोचते। न केवलं गानमेव अस्य वैशिष्ट्यम् अपि तु सर्वे यज्ञाः सामाश्रिताः सन्तीति अस्य अपरवैशिष्ट्यम् । ''यज्ञो वै विष्णुः''[1] स यज्ञात्मको विष्णुः स्वयं भगवद्गीतायां ''वेदानां सामवेदोऽस्मि''[2] इत्यनेन वचनेन स्वस्य सामरुपत्वम् उक्त्वा सामवेदस्य माहात्म्यं प्रतिपादितवन्तः ।

वेदाः यज्ञार्थम् अभिप्रवृत्ताः अतः सामवेदेऽपि प्रकृतियागतः नैकेषाम् यागानां वर्णनम् उपलभ्यते । तत्र अस्ति गवामयनाख्य कश्चित् यागविशेषः । तस्य गवामयनसत्रस्य उपान्ते दिनि महाव्रताख्यम् एतत् कर्मानुष्ठीयते । एकाहयागेष्वपि अस्य अनुष्ठानस्य विधानं श्रुतौ वर्तते -

**प्रजापतिः प्रजा असृजत सोऽरिच्यत सोऽपद्यत तं देवा अभिसमगच्छन्त तेऽब्रुवन्महदस्मै व्रतं सम्भराम यदिमन्धिनवदिति तस्मै यत्संवत्सरमन्नं पच्यते तत्समभरंस्तदस्मै प्रायच्छन्स्तदव्रजयत्तदेन-मधिनोन्महन्मर्या व्रतं यदिममधिन्वीदिति तन्महाव्रतस्य महाव्रतत्वं ।।**[3]

अनेन वचनेन अस्य महाव्रतस्य व्याख्यानं सामवेदस्य ताण्ड्यमहाब्राह्मणे चतुर्थ-पञ्चमाध्याये विस्तारेण प्रतिपादितमस्ति । अन्नवृध्यर्थं क्रियमाणमेतत्कर्म वर्तमानभारतेऽपि सर्वेभ्यः अन्नंप्राप्नुयात् इति धिया कर्त्तुं शक्यते । सर्वकारणभूतः प्रजापतिः अपि सर्वाः प्रजाः सृष्ट्वा तस्याः निरन्तरं सुचारुचलनाय अन्नं प्राप्तिहेतोः अस्य महाव्रतस्य अनुष्ठानं कृतवान् इति श्रुतिः निगदति ।

अस्मिन् महाव्रते स्तोत्रगानस्य अस्ति एका विशिष्टा पद्धतिः। महाव्रतेऽस्मिन् सर्वेषां साम्नां पञ्चविंशस्तोमसंख्या निर्धारिता वर्त्तते ।



अत्र ध्यातव्यम् अस्ति यत् एकस्मिन् संवत्सरे सम्पूर्णान्नस्य समृद्धिर्भवति । अस्यैव समृद्धान्नस्य प्राप्त्यर्थं पूर्णरुप संवत्सरस्य स्वरुपं अस्मिन् कर्मणि साधयन्ति ऋत्विजः । एकस्मिन् संवत्सरे चतुर्विंशत्यर्द्धमासाः सन्ति तथा अन्नस्य पञ्चविंशतिसंख्यात्मकेन गणनां कृत्वा पञ्चविंशेति संख्या सिध्यति । अतः अन्नसहितस्य अस्य पञ्चविंशतिसंख्यायुक्तस्य संवत्सरस्य समृद्ध्यर्थं संवत्सरात्मकेऽस्मिन् यज्ञेऽपि पञ्चविंश स्तोमस्य निर्धारणं कृतम् इति श्रूयते।

उक्तं यथा-

**चतुर्विंशं भवति चतुर्विँशो संवत्सरोऽन्नं पञ्चविँशं**[4] **।। इति ।**

अस्मिन् महाव्रते मुख्यतया स्तोत्रद्वयं विचारणीयम् [5]अस्ति तस्यैव अत्र विशेषतया वर्णनं क्रियते । तत्र एकं माध्यन्दिनसवने होतुः पठ्यमानं पृष्ठ्यस्तोत्रं अपरं च अन्नाद्यकामना निमित्तम् ''इलान्दम्'' इति अग्निष्टोमस्तोत्रम् ।[6] प्रथमंस्तावत् होतुपृष्ठविषये उच्यते। स्तोत्रमेतत् पञ्चस्तोमात्मकं पञ्चसामात्मकञ्च अस्ति । एतेषां पञ्चस्तोमानां सौमिक वेद्यां पृथक् पृथक् स्थानेषु उपविश्य गानस्य विधानं ब्राह्मणग्रन्थे विहितम् अस्ति । एतेषां पञ्चस्थानानाम् अपि अस्ति एकं वैशिष्ट्यम् । तत्र ब्राह्मणानुसारं एतानि पञ्चस्थानानि मिलित्वा एका पक्षीसदृशा आकृतिः कल्पिता वर्तते । यथा पक्षिणः शिरः , पक्षौ (दक्षिण, उत्तरौ पक्षौ) पुच्छ, आतामाचेति पञ्च अवयवाः सन्ति तथैव अत्र वेद्याम् अपि पञ्चविधं होतुः पृष्ठ्यस्तोत्रगानं विधास्यते । तत्र कस्यस्तोत्रस्य गानं पक्षिस्वरुपायां वेद्यां कस्मिन् स्थाने भवति इत्यस्य विवरणं यथा ग्रन्थम् अत्र प्रतिपाद्यते ।

| | | | |
|---|---|---|---|
| 1. | **त्रिवृत्स्तोम** | **गायत्रं साम** | **शिरोरुपम्** |
| 2. | **पंचदशस्तोम** | **रथंतरसाम** | **दक्षिणःपक्षः** |
| 3. | **सप्तदशस्तोम** | **बृहतसाम** | **उत्तरःपक्षः** |
| 4. | **एकविंशस्तोमः** | **यज्ञायज्ञीयं** | **पुच्छं** |
| 5. | **पञ्चविंशस्तोमः** | **राजनंसाम** | **आत्मनीकार्यं** |

एवं सर्वे उद्गातारः एतेषां साम्नां गानं कुर्वन्ति।[7] महाव्रते पठ्यमानानां एतेषां पृष्ठ्यस्तोत्राणां पृथक् पृथक् फलविभागमपि ग्रन्थे उपलभ्यते। अन्नकामः, ब्रह्मवर्चसकामः, वीर्यकामः, प्रतिष्ठाकामः।

अस्य महाव्रतस्य मुख्यफलं अन्नसमृद्धिरेव अत एव अस्य पृष्ठ्यस्तोमस्य अन्तिमं स्तोत्रं औदुम्बरीकाष्ठनिर्मितायाम् आसन्द्यामुपरि वेद्याः अन्तस्थाने उपविश्य करणीयम् इति विशेष विधानं श्रुतौ उपलभ्यते । यतो हि अन्नसमृद्ध्यर्थं या ऊर्जा अपेक्षितास्ति साऔदुम्बरीकाष्ठतः उद्गातारः प्राप्नुवन्ति । वैदिकसाहित्ये औदुम्बरी शाखा ऊर्जस्वती वर्त्तते । उक्तं यथा-

औदुम्बरी भवत्यूर्गुदुम्बर ऊर्ज्जमेवावरुन्धे ।।[8] इति ।

अस्यस्तोत्रस्य इतोऽपि अन्यद्वैशिष्ट्यम् अपि ब्राह्मणग्रन्थे श्रूयते । यथा पृष्ठ्यस्तोत्रस्यास्य गानसमये काचन अन्या प्रक्रिया अपि अनुष्ठीयते। यथा अपघाटिला (जलतरङ्ग) वीणावादनं दुन्दुभिवीदनं इत्यादयः। तथा च एकस्य स्तोत्रस्य गानसमये एका नर्त्तकी शिरसि कुम्भं निधाय मार्जालीयस्थाने नृतस्यापि विधानमस्ति।

अनेन प्रकारेण पञ्चस्तोत्रगानसमये एतेषां प्रक्रियाणाम् अनुष्ठानप्रकारः महाव्रताद् अन्यत्र कुत्रापि द्रष्टुं शक्नुमः । एतदेव अस्ति अस्य महाव्रतस्य पृष्ठ्यस्तोत्रस्य वैशिष्ट्यम् । महाव्रतेऽस्मिन् अन्तिमे अग्निष्टोमनामके स्तोत्रे अस्य व्रतस्य फलं स्पष्टतया निर्दिष्टम् अस्ति । अग्निष्टोमस्तोत्रस्य साम्नः नाम 'इलान्दम्'[9] इत्यस्ति । अत्र रलयोः एकत्र स्मरणात् इरान्नमेव इलान्दम् इति नाम्नोच्यते ।अनेन प्रकारेण इलान्दसाम्ना यज्ञावसाने ऋत्विजः यजमानं सर्वाः प्रजाः च अन्नयुक्तायां भूमौ स्थापयन्ति । अर्थात् सर्वाः प्रजाः अन्येन युक्ताः कुर्वन्ति इति भावः ।

उक्तं यथा-

**एतद्वै साक्षादन्नं यदिलान्दमिरान्नं वा एतदिरायामेवान्नाद्ये न्ततःप्रतितिष्ठन्ति ।। इति**[10]।



एवम् अग्निष्टोमस्तोत्रपाठेन अर्थाद् इलान्दं साम्ना एव व्रतमेतद् महाव्रतं भवति । श्रूयते यथा -

**व्रतमिति निधनं भवति महाव्रतस्यैव तद्रूपं क्रियते ,स्वरिति भवति स्वर्गस्य लोकस्य समष्टै, शकुन इति भवति शकुन इव वै यजमानो व्वयो भूत्वा स्वर्गंल्लोकमेति ।।**[11] **इति ।**

महाव्रतस्य अस्य कर्मणः अन्नप्राप्तिः साधनत्वं श्रुतौ अनेकत्र श्रूयते । तत्र एका श्रुतिः विशेषा वर्तन्ते तां प्रतिपाद्य विरमामि । श्रुत्यनुसारं कश्चिद् यजमानः महाव्रताख्यं कर्मेतत् कुर्वन् समये यदि कश्चिद् अन्यः पुरुषः किमिदं करोति ? इति पृष्टे सति अयं यजमानः साक्षात् अन्नमेव अत्स्यति इति ब्रूयुः इति श्रुति निर्देशः।

उक्तं यथा-

**कुले कुले न्नं क्रियते तद्यत्पृच्छेयुःकिमिदं कुर्व्वन्तीतीमे यजमान अन्नमत्स्यन्तीति ब्रूयुः।। इति।**[12]

अनेन ज्ञायते यत् राष्ट्रेऽस्मिन् केऽपि जनाः अन्नहीनं मा भूद् इति धिया अनुष्ठीयमानम् एतद् देवयज्ञकर्म वस्तुतः राष्ट्रधर्म एव ।।

टिप्पणीः-

1.शत,ब्रा,1,4,5,3
2.भग,गी.10,22
3.ता.ब्रा.4,10,1
4.ता.ब्रा.4,10,5
5.ता,ब्रा,5,5,2
6.ता,ब्रा,5,3,1
7.आर्षेयकल्प,पृ,सं-142
8.ता,ब्रा,5,5,2
9.र,गा,स,द,5,1
10.ता, ब्रा,5,3,2
11.ता,ब्रा,5,3,5
12.ता,ब्रा,5,6,9

***

# 20. सामवेदीयब्राह्मणग्रन्थानां प्राशस्त्यम्

**श्रीधर पद्माकर अघोर**
सामवेदाध्यापकः
श्री वेङ्कटेश्वरवेदपाठशाला,
अयिभीमावरम्, आन्ध्रप्रदेशः

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलञ्जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।
निलोत्पलदलाभासः सामवेदो हयाननः ।
अक्षमालान्वितोदक्षे वामे कम्बुधरस्मृतः।।
सामप्रियं सामगेयं सामवेदोल्लसन्मुखम्।
वामदेवमहंवन्दे सामगाँश्च महीसुरान्।।

वेदशब्दोऽयं ज्ञानार्थकाद् "विद्" धातोः करणे "घञ्" प्रत्यये सिध्यति। "वेद्यन्ते ज्ञाप्यन्ते धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयोपायाः येन स वेदेति"। अतश्चेष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायबोधक ग्रन्थत्वं वेदत्वं नित्यपि तस्य लक्षणं भवति। तदुक्तं सायणाचार्यैः - कृष्णयजुर्वेदभाष्यभूमिकायाम् ऐतरेयभाष्यभूमिकायाञ्च। "इष्ट प्राप्त्यनिष्टपरिहारयोलौकिकमुपायं यो ग्रन्थो वेदयति स वेद" इति तत्र प्रमाणञ्च प्रदर्शितम्।

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एवं विदन्ति वेदेन तस्मात् वेदस्य वेदता।।**

कृ.य.भा.भू.

स च वेदश्चतुर्धा विभक्तः। ऋग्वेदः,यजुर्वेदः,सामवेदः, अथर्ववेदश्चेति। स च वेदः पुनश्चतुर्धा संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषदरुपेण च विभक्तः। संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते। वेदो धर्मनिरुपणे स्वतःप्रमाणम्। स्मृतिग्रन्थानां तु वेदमूलकतया प्रामाण्यमिति मीमांसाशास्त्रे विवेचितम्।



**मन्त्रश्च ब्राह्मणश्चैव द्वावेतौ वेदसंज्ञकौ**
**कण्ठं भित्वा विनिर्यातौ ब्रह्मण उत्तमाङ्गतः।**

प्रधानतया वेदो द्विविधः मन्त्ररूपो ब्राह्मणरुपश्चेति। मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः ब्राह्मणरुपो वेदभागस्तु संहिताभागस्य व्याख्यारुप एव। स चायं ब्राह्मणभागो यागस्वरुपबोधकतया वैदिकविधिप्रयोग विवरणतया च प्रथितः।

यज्ञस्वरुपप्रतिपादको ब्राह्मणभागः। अरण्ये पठिताः यज्ञस्वाध्यात्मिकं रुपं विवेचयन्तो वेदभाग -आरण्यकानि। उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि,अयमेव भागो वेदस्यान्तरुपतया वेदान्त इत्युच्यते।

"सा च अमश्चेति तत्साम्नः सामत्वम्"

(श.ब्रा.१४.४.१.२१) इति

अत्र "सा" शब्देन ऋक् परामृश्यते। "अम्" शब्देन च अत्र षड्जादि सप्तस्वराः अभिहिताः सन्ति। इत्थं ऋचा सह सम्बन्धस्वरप्रधानं गायनमेव सामशब्दस्य व्युत्पत्तिलभ्योऽर्थः भवति।

"वेदानां सामवेदोस्मि" (भ.गी.१०.१२)इति भगवान् श्रीकृष्णेन श्रीमद्भगवत्गीतायां स्वविभूतित्वेन परिगणयामास। यदाह भगवान् पतञ्जलिः "सहस्त्रवर्त्मा सामवेदः " इति। तत्र सहस्त्र शाखानां नामान्यपि क्वचिदपि ग्रन्थेषु नोपलभ्यन्ते। तेषु तिस्त्र एव शाखाः सम्प्रति अध्ययनपरम्परायामुपलभ्यन्ते। ताश्च शाखाः राणायनी,कौथुमी,जैमिनी इति। तिसृणामपि शाखानां महान् भेदो वर्तते। तत्र कौथुमीराणायन्योः किञ्चिदिव न्यूनो भेदः।

**एकान्तरः स्वरो ह्यक्षु गाथासु द्व्यन्तरस्वरः,**
**सामसु त्र्यन्तरम् विद्यादेतावत्स्वरतोन्तरम् ।।**

ना.शि.१.१.३ इति

ऋक्षु उदात्तादिस्वर एकान्तरः प्रयुज्यते। गाथासु "महन्मेवोचः" ता.ब्रा.१.१.१ ब्राह्मणग्रन्थेषु द्व्यन्तरः प्रयुज्यते। सामसु त्र्यन्तरः प्रयुज्यते।

ऋगादिषु तत्तत् स्वराणां प्रयोगे एतादृशं वैशिष्ट्यं जानीयात्। एकस्य स्वरस्योच्चारणाद् द्वितीयस्य स्वरस्योच्चाराणे अनन्तरमृगादिषु विलक्षणं जानीयादित्यर्थः।

सामवेदे संहितापाठः, पदपाठः, ब्राह्मणपाठः, कल्पाः, प्रातिशाख्यानि च सन्ति। इतरवेदापेक्षया सामवेदे ग्रन्थानां बाहुल्यमस्ति। ब्राह्मणानि च अष्टौ विद्यन्ते।

**अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम्,**
**षड्विंशाख्यं तृतीयं स्यात् ततस्सामविधिर्भवेत्।**
**आर्षेयं देवताध्यायो भवेदुपनिषत्ततः,**
**संहितोपनिषद्वंशो ग्रन्था अष्टावुदीरताः।।**

इति दैवतब्राह्मणभाष्यारम्भे –

१) ताण्ड्यब्राह्मणम् २) षड्विंशब्राह्मणम् ३) सामविधानब्राह्मणम् ४) आर्षेयब्राह्मणम् ५) दैवतब्राह्मणम् ६) छान्दोग्योपनिषद्ब्राह्मणम् ७) संहितोपनिषत् ८) वंशब्राह्मणञ्चेति। इतरब्राह्मणग्रन्थापेक्ष्य बृहत्वात् निखिलसोमयागतदङ्गस्तोत्रादि विधायकत्वाच्चास्यैव प्राधान्यमध्यवसीयते। अत एवादिमत्वमस्य। बृहत्वाच्च प्रौढं ब्राह्मणमित्यप्यभिधीयते, किमर्थं ताण्ड्यब्राह्मणमुच्यते ? ताण्डिर्नाम कश्चिदृषिरासीत्सामवेदाचार्यः, तेनेदं दृष्टं ताण्ड्यब्राह्मणम्, ताण्ड्यब्राह्मणभाष्ये आदित्याहवनीयाद्यु-पस्थानमन्त्रविनियोगे "ताण्डिशाखाधीतानां". इति. ता.ब्रा.१.४.१ उक्तम्। तत्र यजुर्वेदस्यापि "रौरुकिनामक" एका शाखा आसीत् इत्युच्यते, अत्र च पञ्चविंशतिरध्यायाः तेन कारणेन पञ्चविंशतिब्राह्मणमपि व्यपदिश्यते।

अत्रैव ह्यग्निष्टोमसंस्थाकं ज्योतिष्टोममारभ्य सहस्रसंवत्सर-पर्यन्तं सोमयागानुक्रमेन विहिताः तदङ्गभुतानि यानि सामवेदियान्य-ङ्गानि। स्तोत्राणि, तदङ्गसंख्याविशेषाः स्तोमाः, तेषां विष्टुतिप्रकारः स्तोमभागश्चेत्यादीनि तान्यपि विहितानि। प्रगीथगुणनिष्ठगुणाभिधानं स्तोत्रम्। "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् इति।।



(तै.सं.३.१.२.) इति विधिना तत्तद्ग्रहचमसादि पात्रेषु तत्तद्देवताभ्यः सोमरसं गृहीत्वा स्थापिते अनन्तरं सदोनामकमण्डपे औदुम्बर्याख्य-स्थूणासमीपे उपविष्टैरुद्गातृप्रस्तोतृप्रतिहर्ताख्यैस्त्रिभिर्ऋत्विग्भिः सामविशिष्टऋग्भिःक्रियमाणस्स्तुतिविशेषः स्तोत्रपदाभिधेयः । तेषां च स्तोत्राणां "एकं साम तृचे क्रियते स्तोत्रियम्" इति विधिबलात्। तिसृषु ऋक्षु एकं साम गातव्यं भवति। तत्र ये संख्याविशेषा उक्तास्ते स्तोमपदवाच्यः। ते च संख्याविशेषाः त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः,चतुर्विंशः,चतुश्चत्वारिंशः,अष्टाचत्वारिंशः इति नवप्रकाराः। इमे एव प्रकरास्तत्तत्क्रतुषु क्वचिदभ्यस्ताः क्वचिदनभ्यस्ताश्च। तत्तद्विध्यनुसारं क्रियेरन्। त्रिवृत इति नवसंख्या, त्रिणवः सप्तविंशतिः, अन्यत् सर्वं सुगमम्।

यच्च द्वितीयं षड्विंशब्राह्मणं "षड्विंशाख्यं द्वितीयं स्यात्" इत्युक्तं,तत् अस्येव ताण्ड्यब्राह्मणस्याँऽशभूतम्। अत एव तस्य "ताण्ड्यशेषः" इत्यप्यपरं नाम। भाष्यकारोऽपि च "अथाऽस्मिन् ताण्ड्यशेषब्राह्मणे" इत्येव भाष्यमवतारयति। ताण्ड्योक्तानामेव केषाञ्चित कर्मणां भेदादिकं अनुक्तानां चाऽल्पीयसां कर्मणां स्वरुपं चेत्येषामेवाऽत्र प्रतिपादनात्। अनन्तरं सामविधानब्राह्मणम्।

न तत्र यज्ञादिकं तदङ्गानि वा विधीयन्ते। कृच्छ्रचान्द्रायणादीनि प्रायश्चित्तानि विधीयन्ते। तत्तत्पापक्षयार्थं तानि च प्रायश्चित्तानि तत्तत्सामाध्ययनरुपाण्येव। होमा अपि तदङ्गतया केचन तत्र क्वचित् क्वचिद्विहिताः एतच्च प्रपाठकत्रयात्मकम्।

तत आर्षेयब्राह्मणम्। तदपि प्रपाठकत्रयपरिमितम्। तत्र संहिताग्रन्थोक्तानां साम्नामृष्यादिकं प्रतिपाद्यते ।

अनन्तरं दैवतब्राह्मणम्। तच्च खण्डत्रयात्मकं। तत्र निधनानां देवताः,छन्दांसि तेषां वर्णसंख्या, तेषां देवताः, तन्नामनिर्वचनं चेति प्रतिपाद्यन्ते। ततः उपनिषत्।

साऽष्टाध्यायी परब्रह्मविषयिणी छान्दोग्योपनिषदिति प्रसिद्धा। सा जीवात्मपरमात्मनोरैक्यादिकं जगन्मिथ्यात्वादिकमित्याद्यात्मज्ञानौपयिकान् विषयान् प्रतिपादयति। ततस्संहितोपनिषत्।

अत्र मन्त्रसंहिताभेदाः तत्तदध्यनप्रशंसा, मन्त्रदर्शनादिकं, तत्तफलादिकं चेति कथ्यते। अनन्तरं वंशब्राह्मणाख्यमन्तिमं ब्राह्मणम्।

तत्र च सम्प्रदायप्रवर्तकाणामाचार्याणां परम्परानुकीर्तनम्। सेयं विद्यापरम्परा न जन्मपरम्परा। वंशो हि द्विविधो-विद्यया जन्मना च। सेयं विद्यापरम्परेत्यवगन्तव्यम्।

एवं अष्टसु ब्राहमणग्रन्थेषु लौकिकोपायकाः विषयाः उक्ताः। अन्ते एकमेव उदाहरणं उक्त्वा विरमामि। "सामहि सत्याशीः" ता.ब्रा. १५.५.१२ इति। साम खलु सत्याशीः ऋचां यजुषाञ्च मध्ये अवितथत्वेन फलप्रतिपादकं सामेत्यर्थः। इति शम्।।

***



# 21.सामविधानब्राह्मणोक्त अभक्षभक्षणपातकप्रायश्चित्तम्

**अक्षय कुलकर्णी**
अतिथि-अध्यापकः
श्रीवेङ्कटेश्वरवेदवश्वविद्यालयः,
तिरुपतिः

वैदिकवाङ्मये सामवेदस्य महत्वपूर्णस्थानं वर्त्तते । महाभाष्ये उल्लिखित "सहस्रवर्त्मा सामवेदः"[1] इति वचनेन ज्ञायते यत् सामवेदस्य सहस्रशाखाः आसन् इति । बृहदारण्यकोपनिषदि "सा च अमश्चेति तत्साम्नः सामत्वम्"[2] इत्यनेन वाक्येन सा इति पदस्य अर्थः ऋक्, एवम् अम पदस्यस्य अर्थः गानं (षड्जादिस्वरम्) इत्युक्त्वा सामशब्दस्य निर्वचनं कृतम् । न केवलं गायने एव अस्य महत्ता, अपि तु विविधप्रयोगेषु यज्ञयागादिषु च प्रयुज्यमानानां साम्नां विनियोगः अष्टब्राह्मणैः कृतः। सामवेदस्य अष्टब्राह्मणे तृतीयसामविधानब्राह्मणे श्रीसाधनम्, विविधसोमयागादिनां फलसाधनम्, पातकाद्विमोचनार्थं प्रायश्चित्तादि सामयुक्तप्रयोगाः प्रतिपादिताः । तेषु प्रायश्चित्तप्रकरणे अभोज्यभोजनम्-अमेध्यप्राशनपातकयोः प्रायश्चित्तं प्रोक्तम् । अभोज्यपदस्य तात्पर्यमस्ति यद् खादनार्थे अयोग्याः पदार्थाः, भोजने निषिद्धम् एवम् अपवित्रान्नम्, यद्भोजनम् द्विजानां कृते अनुपयुक्तं भवति तद् भोजनम् इति । तद्भोजनस्य ग्रहणं कृत्वा द्विजः पापी भवति , अतः पूतार्थं ब्राह्मणोक्तप्रायश्चित्तव्रतानि आचरणीयानि ।

अमेध्यम् नाम अपवित्रं मलयुक्तम् मूत्रपुरीषादि । एते अपवित्रपदार्थाः शास्त्रदृष्ट्या निषिद्धाः अमेध्याश्च । यदि कश्चिद् एतेषां अमेध्यानां प्राशनादि कार्यं करोति चेत् अनेन पातकेन संलग्नो भूत्वा नरकं प्राप्य कष्टमनुभवति, अतः तं कष्टम् अननुभवार्थं ब्राह्मणोक्तप्रायश्चित्तव्रानि आचरणीयाणि।ब्राह्मणातिरिक्तं विषयेऽस्मिन् बहुषु ग्रन्थेषु विविध विचारः दृश्यते । यथा धर्मसूत्रेषु स्मृतिग्रन्थेषु च निषिद्धान्नस्य भक्षणेन मानवः अपवित्रो भवतीत्युक्तम् । तद्यथा-

सुरायाः कृते उपयुक्त पात्रे जलस्य पानेन। चाण्डालः,शूद्रादि गृहस्य जलपानेन ।एवं अयोग्यदुग्धस्य पानेन च मानवः अपवित्रो भवति ।[3]

संवर्त्तमतानुसारेण गोमांसम् एवं मानवमांसस्य सेवनं कृत्वा सेवनकर्ता अपवित्रो भवति। ततः शुद्ध्यर्थं संवर्त्तस्मृतौ उदारमतेन चान्द्रायणव्रतस्य व्यवस्थां कृतास्ति । तद्यथा - गवां मांसं, मानवानां मांसं च एवं श्वकुनस्य हस्तात् स्वीकृतमन्नं, एतत् सर्वं अभक्षान्नं भवति । एतेषु एकमपि अभक्षान्नं भक्षयित्वा ततः शुद्ध्यर्थं चान्द्रायणव्रतं कर्त्तव्यम् ।[4]

शूद्रवर्णैः स्वीकृतनदीषु तडागेषु च स्थितं जलं यो अकामतः पिबति स पञ्चगव्यपानेन शुद्ध्यति । सुरायाः घटेन नासिकया च जलपानेन द्विजः अहोरात्रम् उपवासं कुर्वन् पञ्चगव्यस्य प्राशनं कृत्वा शुद्धो भवतीति । कूपे स्थित मलमूत्रादि संस्पृष्ट जलस्य पानं कृत्वा द्विजः त्रिरात्रव्रतेन शुद्धयति, तथैव कुम्भे स्थित मलमूत्रादि संस्पृष्ट जलस्य पानं कृत्वा द्विजः सान्तपनव्रताचरणेन शुद्ध्यति[5] । मलम्, एवं मूत्रादि भक्षयित्वा प्राजापत्यव्रतस्य पालनं कर्त्तव्यम् । शुनकस्य, काकस्य, एवं गोरुच्छिष्टान्नं भक्षयित्वा ब्राह्मणः दिनत्रयात्मकम् उपवासव्रतस्य पालनं कर्त्तव्यम् ।[6] मलमूत्रं एवं रेतो भक्षयित्वा, वनस्य पशवः खरः,ऊष्ट्रः, इत्यादीनां शरीरस्य मांसं खादित्वा अथवा ग्रामे स्थित कुक्कुटशूकरयोश्च माँसं भक्षयित्वा च, एवं मद्यप्राशित मानवस्य मुखात् गन्धघ्राणेन भोक्ता घ्राता च पापी भवति तस्माद्विमोचनार्थं त्रिवारं प्राणायामं कृत्वा घृतप्राशनं कुर्यादिति।[7] मद्यपानम् एवं गोमाँसभक्षणं कृत्वा द्विजपातकी तप्तकृच्छ्रव्रताचरेणन एवं मौर्वी होमेन शुद्धो भवतीति ।[8]

**उच्छिष्टान्नभक्षणपातके प्रायश्चित्तम् आपस्तम्बस्मृतौ -**

यदा कदाचिद्विजः अज्ञानतो ब्राह्मणस्योच्छिष्टान्नं खादति चेत्तर्हि स अहोरात्रौ गायत्रीजपेन शुद्ध्यति। द्विजः अज्ञानतः वैश्यजातीयव्यक्तीनामन्नं भक्षयित्वा शङ्खपुष्पेः जलं पीत्वा त्रिरात्रव्रतेन



शुध्यतीति । यो ब्राह्मण्याः उच्छिष्टान्नं भक्षयति स कदापि दोषं न प्राप्नोति इति मुनयः मन्यन्ते । स यदि ब्राह्मणवर्ण-व्यतिरिक्तस्त्रीणां उच्छिष्टान्नं भक्षयित्वा स्पृष्ट्वा च प्राजापत्यव्रतेन शुद्ध्यति। शूद्रवर्णस्य भुक्तशेषान्नं भुक्त्वा द्विजः चान्द्रायणकृच्छ्रं, क्षत्रियः तदेवार्धकृच्छ्रं वैश्यः तदेव अर्द्धार्द्धकृच्छ्रं चरेत्[9]। इत्युच्छिष्टान्नभक्षणपातके प्रायश्चित्तानि।

विप्रव्यतिरिक्तवर्णस्य शुष्कान्नं खादित्वा पञ्चरात्रेण जीर्णं भविष्यति, तथैव तद्विपरीतं व्यञ्जनसंयुक्तम् अशुष्कान्नम् भक्षयित्वा अर्द्धमासेन शुद्ध्यतीति। दुग्धम् एवं दधिं विप्रव्यतिरिक्तवर्णतः स्वीकृत्य पिबति चेत् एकमासेन जीर्यति, तथैव घृतं पिबति चेत् अर्द्धसंवत्सरेण जीर्यति, तैलः तु संवत्सरं संवत्सरपूर्त्तिपर्यन्तम् उदरे एव तिष्ठति तज्जीर्यति वा न वा इत्यपि कथितुं न शक्नोतीति[10] ।

शूद्रान्नं खादित्वा यो मनुष्यः पुत्रप्राप्त्यर्थं मैथुनं करोति, स यस्य कस्यापि अन्नं खादितमासीत् तस्यैव पुत्राय जन्मं प्रददाति न तु स्वस्य, किमर्थमित्युक्ते अन्नेन एव शुक्रस्य उत्पत्तिः सम्भवति[11] । उत्तमवर्णब्राह्मणस्य अन्नं खादति चेत् तदमृतसदृशं भवति, क्षत्रियस्यान्नं क्षीर सदृशं, वैश्यवर्णस्यान्नम् अन्नमेव भवति, शूद्रस्यान्नं रुधिरसमानम् इति स्मर्यते[12] ।। यदि ब्राह्मणेन आपत्काले शूद्रवर्णस्य गृहे भोजनं कृतमासीत् तर्हि स मनस्तापेनैव शुद्ध्यति अथवा दृपदमन्त्रस्य शतवारं जपेन शुद्ध्यतीति[13] । पलाण्डुं, लशुनं, मद्यं, (कवकानि) मानवस्य मलम्, विड्वराहखरेत्यादि मांसाहारी जीवान् खादित्वा 'प्रातः मध्याह्ने एवं सायंकाले स्नात्वा वने पर्णाणां कूटीं कृत्वा भूम्योपरि शयेत, एवं जटादि धारणं कृत्वा पर्णानि, मूलानि, फलानि च अश्नीयात्, ततः स्वकर्म परिकीर्तयन् भिक्षार्थं च ग्रामे प्रवेशं कृत्वा एकवर्षपर्यन्तम् एककाले एव भोजनं कुर्वन् व्रतमाचरेत्' (आ.स्मृ.17,1-3) ततः पूतः शुद्धो भवतीति[14]।

भोजनस्य अयोग्यपदार्थान् भक्षयित्वा त्रिरात्रावरं न भोक्तव्यम् यावत्पर्यन्तं निष्पुरीषीभावः न भवेत्, न्यूनातिन्यूनं दिनत्रयं तु

न भोक्तव्यम्, अथवा सप्तदिनेषु स्वपक्वान्नं, वने पतित फलानि च खादितव्यानि, पञ्चनखीयप्राणीनां मांसादि खादित्वा वपनं कुर्यात् घृतप्राशनं च[15] ।।

उपर्युक्ताः सर्वेऽपि दोषाः प्रायः अभोज्यभोजनेन अमेध्यप्राशनेन निष्पन्नाः भवन्तीति ज्ञायन्ते । तदर्थमेव विविधस्मृत्यादिग्रन्थेषु नानाप्रायश्चित्तानि विहितानि सन्ति । तेषां प्रायश्चित्तानां यदि एकेन पुरुषेण अनुष्ठानं क्रियते चेत् महद् कष्टसाध्यमेव । अतः उपर्युक्तानां दोषाणां केवलं एकेनैव सामावृत्तिप्रायश्चित्तेन परिहारो भवति चेत् तद्वरमेव । तदेव एकं प्रायश्चित्तं सामविधानब्राह्मणे प्रदत्तमस्ति । तद्यथा-

**सामविधानब्राह्मणे-**

अभोज्यम् उच्छिष्टादि निन्दितान्नं तस्य भोजनं कृत्वा, अमेध्यम् मूत्रपुरीषादि तस्य प्राशने वा संभाविते । अमेध्यमिदं दुष्टान्नस्य अपि उपलक्षणम् । तदुभयोरपि अपगमाय त्रिरात्रावरमुपवसन् ततोऽधिकं वा भुक्तप्राशितानुगुण्येन यथाशक्ति उपवसन् तेषु दिवसेषु एवं पठेत्[16]-

**एतोन्विन्द्रँ स्तवाम शुद्धँशुद्धे न साम्ना । शुद्धैरुक्थैर्वावृध्वाँसं**
**शुद्धैराशीर्वान्ममत्तु[17] ।।**

इत्यस्याम् ऋच्युत्पन्नयोः प्रथमं साम गायेत् । तद्यथा-

पदान्तनिधनं शुद्धाशुद्धीयम् । इन्द्रोऽनुष्टुबिन्द्रः[s] ।।

एतोन्विन्द्रँस्तावामा । शुद्धँशुद्धेनसाऽ23म्ना । शुद्धैरुक्थैर्वावृध्वाँऽ23साम । शुद्धैराऽ23शीऽ3 । र्वाऽ2न् । ममाऽ34औहोवा । तूऽ2345 ।। (दी.10,प.7,मा.3)

अस्य साम्नः सहस्रकृत्वः आवर्तनं कृत्वा पूतः शुद्धो भवतीति । उपर्युक्त अभोज्यभोजने विविधप्रायश्चित्तव्रतानि न चरेच्चेत् तस्य दुष्प्रभाव एवं प्रकारेण भवति- यः कोऽपि शूद्रवर्णस्य अन्नं मासं



मासपूर्तिपर्यन्तं खादति चेत् तर्हि स अस्मिन् लोके शूद्रत्वं प्राप्नोति, एवं मरणानन्तरं शुनकस्य योन्याम् उत्पन्नो भविष्यति[19] ।।

**गौतमस्मृतौ—**

अभक्ष्यभक्षणं कृत्वा यः प्रायश्चित्तं न करोति स मनुष्य अग्रिमे जन्मनि उदरे कीटकेन सह जन्मं स्वीकरोति । तस्मात् शुद्धिभावार्थं भीष्मपञ्चकव्रतं आचरेत्। (कार्त्तिकमासे शुक्लपक्षे एकादशीतः पौर्णिमापर्यन्तं पञ्चदिनानि) तेषु शास्त्रोक्तविधिना उपवासः कर्त्तव्यः[20] । इति।

उपर्युक्तवचनेन ज्ञायते यत् यदि यः कोऽपि मानवः निषिद्धभोजनस्य भक्षणं करोति चेत् तर्हि स अपवित्रो भवति । अन्नदोषेण उत्पन्नमनोविकारादिदोषाः व्याधयश्च निराहारेण दूरीकर्त्तुं शक्यते । नो चेत् शीघ्रातिशीघ्रतया प्रायश्चित्तव्रतानि आचरेत् । स्मृत्युक्तप्रायश्चित्तापेक्षया श्रुत्युक्तप्रायश्चित्तं सुलभं सुदृढं च वर्तते । तदर्थं अधिकतरं उपर्युक्तसामावृत्तियुक्तप्रायश्चित्तव्रतस्य आचरणं कृत्वा सत्वरं शुद्धो भवतीति । उच्यते खलु भगवान्नारायणः भगवद्गीतायां "वेदानां सामवेदोऽस्मि[21]" इत्यनेन ज्ञायते यत् कियत्सामर्थ्यम् उपर्युक्तसाम्नसु अस्तीति । इति ।।

टिप्पणीः-

1.व्याकरणमहाभाष्यं पस्पशाह्निकम् 2.बृहदारण्यकोपनिषद्-1,3,22
3.संवर्त्तस्मृतिः-190 4.सं.स्मृ.200 5.सं.स्मृ.189-191
6.सं.स्मृ.194 7.गौ.स्मृ.24,2 8.ल.य.स्मृ.30
9.आ.स्मृ.5,5-9 10.आ.स्मृ.8,5-6 11.आ.स्मृ.8,10
12.आ.स्मृ.8,13 13.आ.स्मृ.8,20 14.शं.स्मृ.17,20-21
15.गौ.स्मृ.24,5 16.सा.वि.ब्रा.1,5,13 17.पू.सं.350
18.सा.सं.600 19.आ.स्मृ.8,7
20. (शा.स्मृ.3,4) 21.भगवद्गीता-10,22

***

## 22. सामगानवैशिष्ट्यम्

**डा तारकरामकुमार शर्मा**
सङ्कायप्रमुखः, वेदवेदाङ्गसङ्काय
श्रीवेङ्कटेश्वरवैदिकविश्वविद्यालयः
तिरुपतिः

विदितचरमेव तत्सामगानप्रियत्वं सकलदेवानाम्। स्पष्टं श्रूयते च तैत्तिरीयसंहितायाम् "देवा वै नर्चि नयजुष्यश्रयन्त ते सामन्नेवाश्रयन्त "इति, अतएव वेदेषु चतुर्षु विद्यमानेषु भगवान् पार्थसारथिरात्मानं सामवेदत्वेन निर्दिशति- **"वेदानां सामवेदोऽस्मि"** इति। "सर्वैश्च वेदैरहमेव वेद्यः" इति सर्ववेदगम्यत्वं स्वस्य कीर्तयन्नपि विशिष्य सामवेदत्वेन निर्देशे किं तात्पर्यमिति विमृशामः। **'गीतिषु सामाख्या'** इति जैमिनिसूत्रेण सामशब्दस्य गीतिरर्थः प्रतिपादितः। गीतेः कोऽप्यर्थो न भवति वाच्यवाचकभावेन; किन्तु "ऋच्यध्यूढं साम" गायति इति विध्यनुसारेण सामगानम् ऋगधिकरणकं भवति। अधिकरणभूताया ऋचोऽर्थो वर्तते।

स चार्थो गुणिनिष्ठगुणरूपः। गुणिनश्चेन्द्रादयः, गुणरहितोऽपि परमात्मा लीलावशेन सगुणो भवतीति परमात्मापि गुणी सञ्जायते। तथा च गुणिनिष्ठगुणाभिधानमृचः कुर्वन्ति। तदिदं गुणाभिधानं गीतियुक्तं सत् स्तोत्रमित्युच्यते। गीतिरहितं चेच्छस्त्रमिति कथ्यते। एवञ्च "प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधाने स्तोत्रमिति", "अप्रगीतमन्त्र-साध्यगुणिनिष्ठगुणाभिधाने शस्त्र"मिति च जैमिनिर्व्यवहरति।

प्रगीतमन्त्रसाध्येन गुणिनिष्ठगुणाभिधानेन परमेश्वरो भक्ताधीनो भवति। भक्ताधीनतया वर्तितुं भगवान् स्वयं वाञ्छति। अथवा भक्ता भगवन्तं स्वाधीनेऽवस्थापयन्ति गीतियुक्तसाहित्यगानेन। कुशलगायका न केवलं परमेश्वरमेव वशीकुर्वन्ति; किन्तु श्रोतॄणां



मनांस्यावर्ज्य स्ववशे तान् निक्षिपन्ति। सहृदया अपि साधारणीकरणन्यायेन गायकाधीनगीत्यै स्वीयं मनस्सम्प्रेष्य तत्र रममाणमनुभूय परममानन्दमनुभवन्ति। सहृदायानां प्रिया खलु गीतिः। तस्यै स्वीयं मनस्सम्प्रेष्य तत्र रममाणमानं विलोक्य कश्चिद् वदति-

"नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः।
तत्तु तत्रैव रमते हताः पाणिनिना वयम्"।। इति

उपहासजनकमिवेदं पद्यम्; किन्तु तादृशी दशा यदि प्राप्यते सहृदयेन, तर्हि ततोऽपि धन्योऽन्यः कस्स्यात् परमेश्वर इमां दशामवा-प्यैव कथयति -**'वेदानां सामवेदोऽस्मि'** इति।

सामविधानब्राह्मणे साम्नां काम्यप्रयोगान् संख्यातीतान् वर्णितानुपलभामहे। तानत्र सङ्गीतप्रयोगेष्वतिदिश्य यदि गायकाः प्रचारं कुर्युस्तदा मन्ये नैतिकपतनादुत्थिताः प्रजा देशसमुन्नायका भवेयुः। त्यागराजादयो मनीषिण उच्चावचानि गीतिसाहित्यानि निर्मायास्मानन्वगृह्णन्। ते हि भारते सर्वाणि क्षेत्राणि पर्यटय्य विविधमन्दिरेषु प्रतिष्ठिता देवताः स्तुवन्तो लोकानां दैवसान्निध्यं यथा स्यात्, तथा प्रदर्शयाम्बभूवुः। तानि क्षेत्राणि ताश्च देवता अधुनापि वर्तन्त एव। तत्तत्क्षेत्राधिष्ठितदेवतानां या अनुद्भूताश्शक्तयस्ता उद्दीपयितव्याः। अग्निस्फुलिङ्गेष्वनुद्भूतां दाहकत्वशक्तिमिन्धनादिदानेन यथा विवर्धमानः, तथैव ताल-लय-पदसङ्घटनादिसमन्वितैरिन्धनै-र्देवतानां शक्तय उद्भावनीयाः। एकस्याः शक्तेः शक्त्यन्तरसमुद्भावकत्वं लोके दृष्टचरम्।

शब्दो द्विविधः - ध्वन्यात्मको वर्णात्मकश्चेति। ध्वन्यात्मक-शब्दस्यार्थवाचकत्वाभावेऽपि तद्द्योतकत्वं तावदक्षुण्णम्। ध्वनिभिर-भिव्यक्ता वर्णा ध्वनिद्योतितानर्थान् अभिदधति। अभिव्यञ्जकेषु ध्वनिषु नष्टेषु तदभिव्यक्ता वर्णा अपि नष्टा इवावभान्ति; परं वर्णा न नश्यन्ति।

वियतिसर्वगतास्तेऽभिव्यञ्जकसापेक्षास्तिष्ठन्ति। अभव्यञ्जकेषूत्पन्नेषु ते प्रकाशपथमागत्य स्वीयां शक्ति प्रयुञ्जते। तया च शक्त्या देवताशक्तिराविर्भवति। तत्तद्वर्णगतशक्तिरेव देवताशक्तिरूपेणाविर्भवतीति हेतोरेव शक्तिशक्तिमतोरभेदं केचन दार्शनिकाः प्रतिपादयाम्बभूवुः। अत एव परमात्मनाविष्कृतस्यास्य चराचरात्मकस्य जगतः कार्यकारणयोरभेदमङ्गीकृत्य जगत्परमात्मनोरभेदं व्यवस्थापयं बभूवुः। एवं सति सामवेदस्य परमात्मनश्चैकरूपत्वे कस्सन्देहः ? तदिदमुक्तम् - **"वेदानां सामवेदोऽस्मि"** इति।

किञ्च, भूयस्सु विचक्षणेषु वेदलक्षणपारङ्गतेषु सम्भूय सामगानं कुर्वत्स्वेकरूपतामनुभवामः। तैस्तैः क्रियमाणाः कण्ठताल्वाद्यभिघाता भिन्नाः। भिन्नैरभिघातैः प्रेरिता वायवो वीचीतरङ्गन्यायेन तत्तच्छ्रोत्रपुटाकाशगतान् वर्णान् अभिव्यञ्जयन्ति। यदीमे तानुत्पादयेयुस्तर्ह्येकस्मिन् काले सर्वेऽपि शब्दान् न शृणुयुः। शृण्वन्ति तथा। इयमेकरूपता सामगानश्रवणे यथा वर्तते, तथैव विविधवाद्यसमन्वितो गायको यदा गायति, तदा तत्तद्वाद्योत्थध्वनीनां गायककण्ठोद्भूतध्वनीनाञ्चैकरूपता विद्यते। अत्र वाग्योगः स्वरयोगश्चेत्युभयस्मिन्नेकरूपतानुभूयते। वाग्योगविदः स्वरयोगविदश्च सहृदयाः समानमानन्दमनुभवन्त एकरूपतां भजन्ते। 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुत्याऽऽनन्द एव परं ब्रह्म। तादृशं ब्रह्मैव वेदः। तदिदं भगवतोक्तम् – **'वेदानां सामवेदोऽस्मि'** इति।

सामवेदे तन्मूलके च सङ्गीतशास्त्रे सर्वत्र प्रचारपथमानीते प्रकृतिरनुकूला तिष्ठेत्। भौतिकविज्ञानेन सहाध्यात्मिकविज्ञानधाराया अपि प्रवर्तनमावश्यकम्। पुरातनं भारतस्य गौरवमपि संरक्षणीयम्।



पुरातनं गौरवं कीदृशमासीदिति संक्षेपेणास्मदपत्यानि शिक्षणीयानि। शिक्षाक्रमे सङ्गीतशास्त्रप्रवर्तकानां विशिष्टसङ्गीतज्ञानाञ्च सचित्रपरिचयपुरस्सरं पुस्तकानि निरमातव्यानि। 'सङ्गीतसाहित्यकलाविहीनस्साक्षात्पशुः पुच्छविषाणहीनः' इत्युक्तिश्चरितार्था न भवेद्यथा तथा देशनिवासिभिः प्रबन्धः कार्यः। सर्वं सर्वकाराधीनमिति नास्माभिरौदासीन्यमवलम्बनीयम्। प्रजातन्त्रक्रमे सर्वकारः परिवर्तनशीलः। परिवर्तनकर्त्र्यश्च प्रजाः। प्रजानां सहयोगेनैव सर्वकारः किमपि कर्तुं शक्नुयात्।

चरित्रनिर्माणे प्रजासु जागरूपकासु सर्वकारस्तदनुकूलानि कार्याणि समाचरेत्। यस्मिन् देशे नानाविधासु कलासु नैकविधेषु विज्ञानविषयेषु दर्शनेषु शास्त्रेषु च पारङ्गताः प्रवीणा भवेयुः, तेनैव सर्वविधं धर्मौन्नत्यमनुभवितुं शक्यम्। ये च निर्मत्सरा निष्पक्षपातिनो निर्लोलुपास्तासु तासु विद्यासु कलासु चाधिगतयशसः, तेषां समितिं संयोज्य तदधीनः शिक्षाविभागः स्वायत्तो यथा भवेत्तथा कृत एव सर्वासां कलानां विद्यानाञ्च विकासो भवेत्। विकसिताभिराभिरेव देशस्समुन्नतः परिगण्येतेति मनसि निधाय **"वेदानां सामवेदोऽस्मि"** इत्यब्रवीद् वासुदेवः।

किञ्च, **"सहस्रवर्त्मा सामवेदः"** इति पतञ्जल्युक्तेः सहस्रं शाखास्सामवेदस्योति ज्ञायते। भगवान् स्वयं "सहस्राक्षः सहस्रपात्" इत्युभयोरेकात्मकता। क ट प यादिसंख्याशास्त्रानुसारेण सामशब्दस्य 7 + 5 = 12 अङ्काः, एवं वेदशब्दस्य 4 + 8 =12 अङ्का इति द्वादशद्वादशाङ्का योगेन निष्पद्यन्ते। इमे चाङ्का द्वादशाक्षर्या अधिष्ठाता देवो वासुदेव इति बोधयन्ति। "वेदैश्च सर्वैरहमेव वेद्यः", "वेदानां

सामवेदोऽस्मि" इत्युभयत्र द्वादशाक्षरीमन्त्रस्य तदधिष्ठातृदेवताया-श्चैकात्मकतामवबोधयन् वासुदेवः कथयति – वेदानामिति। मन्त्ररूपसामवेदस्य मन्त्र प्रतिपाद्यदेवतायाश्चैकात्मकत्वेन भगवदुक्ति-रियं न वितथा भवितुमर्हति।।

****



# Our published books

1. Akshapadiya Goutamiyaparasutraprakash, with Commentary and Indices, pp: 202, price 100/-
2. Samavedaranayaniyam Vargaparibhasitaveyaganam part -1 , pp;250, price 200/-
3. Samavedaranayaniyam Vargaparibhasitaveyaganam part -2, pp;312, price 200/-
4. Phullapotam, (Laxana book of Samaveda) A commentary on Puspasutra of Ganesh pandit, pp:452, price 300/-
5. NaradEyasiksa and NaradEyasiksasangrah: with the Vivarana of Bhattasobhakar and commentary of Narayanaswamy Deekshita, pp.166, price-125/-
6. Samavedasandhyopasana,(sandhya, samidhadana, brahmayagna, devarshi pitrutarpana, bhojana vidhi and yagnopavitadharanam ) pp: 64, price-50/-
7. Samavedapadapatha with indices and Laxana pp 472, price : 750/-
8. Samavedveya-Sarpabalih. pp: 24, price-50/-
9. Samaveda Astabrahmanam (8 Brahmanas of samaveda) Moolapatha only, pp: 566, price-1000/-
10. Jaimineeya Uha-Ushanee (Samaveda Jaimineeya sakha Uha rahasya ganam with indices), pp: 384, A4size, price-1000/-
11. Riktantram with commentary vritti, vyakhya, example, hindi meaning and tulanatmasutram etc. Pp-246, price- 350/-
12. Samavedeya-Karmapradeepah (Chandogaparisistham) Pp-278, price-400/-
13. Samaprabha- Research Articles of Samaveda , pp: 144, price-150/-